


# सामवेद संहिता

## कौथुम शाखा

## गायत्री छन्द पर आधारित मन्त्रों का संकलन



# सामवेद सहिंता

मन्त्रों पर जो १ २ ३ आदि संख्या डली हुई है, ये अंङ्क क्रमशः संख्याएँ उदात्त, स्वरित और अनुदात्त के चिह्न हैं।

ऋग्वेद आदि अन्य वेदों में अनुदात्त का चिह्न नीचे _ रेखा से उसके लिए सामवेद में अंक ३, ऋग्वेद आदि अन्य वेदों में स्वरित का चिह्न । रेखा से सामवेद में अंक २, ऋग्वेद आदि अन्य वेदों में उदात्त पर कोई चिह्न नही होता उदात्त को सामवेद में १ दिखाया जाता है।

**जैसे:-**

**ओ३म् अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि॥**

**ऋग्वेद ६-०१६-१०**

**ओ३म् अग्न आ याहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि॥१सामवेद**

र,श,ष,स,ह से पहले यदि अनुस्वार आ जाए तो वह अनुस्वार ँ चन्द्र बिन्दु त्रियका रूप में परवर्तित हो जाता है ।

इसे लिपिबद्ध करने के लिए पुरातन संस्कृत के उपलब्ध अक्षरों का उपयोग किया गया है। **जैसे:- अ, ऋ, झ, ण, थ, ल, क्ष, श ।**

**उदात्तः उच्चै,** **अनुदात्तः नीचै ,** स्वरित: समाहारः

**उदात्त की परिभाषाः-** जहाँ उपयुक्त हो वहाँ गति तथा ऐसी शक्ति एवं वेग जिसकी समता संभव न हो। उदात्त की अनुभूति के अंतस्तत्व मन की ऊर्जा , उल्लास, संपूर्ण चेतना के अभिभूत हो जाने की अनुभूति, आदर तथा विस्मयमिश्रित संभ्रम बताए गए हैं।

**अनुदात्त की परिभाषाः-** तटस्थ सामान्य न तो उच्च और न ही कम स्वर।

स्वरित की परिभाषाः- तटस्थ सामान्य न तो उच्च और न ही कम स्वर।

# सामवेद सहिंता

सामवेद में कुल १८७५ मन्त्र हैं। जिनमें से २६२ मंत्रों की पुनरुक्ति हुई हैं। एक मन्त्र तीन समय है। अतः (१८७५-२६४=१६११) बचे। गायत्री छन्द के ८७१ मन्त्र हैं। गायत्री छन्द में ही एक मन्त्र तीन समय आया है। व ९९ मंत्रों की पुनरुक्ति हुई है। अतः (८७१-१०१=७७०) मन्त्र गायत्री छन्द के बचे। गायत्री छन्द के गायत्री के पुनरुक्ति के आधार पर मन्त्र नही लिए गये हैं। इस पुस्तक में कुल मंत्रों की संख्या ७७० है। गायत्री छन्द में २९ देवता मिलते हैं। जो सामवेद संहिता में पहले है वह पहले लिए गये है।

**हमारे यहां वेद मन्त्रों के पठन पाठन के परम्परागत पद्धतियों पर आधारित नाना प्रकार होते हैं जैसे जटा पाठ, घन पाठ, माला पाठ, विर्सग पाठ, उदात्त अनुदात्त आदि।**

वेद मन्त्रों का पाठ विशुद्ध रुप से उच्चारण कैसे किया जाये, इसके लिए **श्रृङ्गी ऋषि वेद विज्ञान प्रतिष्ठान** की अन्तरजाल पर उपलब्ध **वेद मन्त्रों का पठन-पाठन** नामक ई-पुस्तक अवश्य अध्ययन करें।

**वेदों की भाषा संस्कृत अर्थात देव भाषा है। आधुनिक वेद महर्षि पाणिनी की व्याकरण पर आधारित हैं।**




शब्द संयोजक-जितेन्द्र बंसल
सृष्टि सम्वत्- १९६०८५३११३
मास- अश्विन शुक्ल पक्ष प्रथमा
kjitender14@gmail.com

## देवता-अग्निः

२ ३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् अग्न आ याहि वीतये गृणानो हव्यदातये ।

१ २र ३ १ २
नि होता सत्सि बर्हिषि॥१

१ २ ३ २ ३ २ ३ १ २
ओ३म् त्वमग्ने यज्ञानाँ होता विश्वेषाँ हितः ।

३ २ ३ १ २ ३ १ २
देवेभिर्मानुषे जने॥२

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।

३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम्॥३

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।

१ २ ३ १ २र
समिद्धः शुक्र आहुतः॥४

१ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् प्रेष्ठं वो अतिथिँ स्तुषे मित्रमिव प्रियम् ।

१ ३ २ ३ १ २र
अग्ने रथं न वेद्यम्॥५

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः।

३ २ ३ १ २र
उत द्विषो मर्त्यस्य॥६

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।

३ १ २ ३ १ २
एभिर्वर्धास इन्दुभिः॥७

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात्।

२ ३ २ २ ३ २
अग्ने त्वां कामये गिरा॥८

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १
ओ३म् त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो

३ १ २
विश्वस्य वाघतः॥९

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
ओ३म् अग्ने विवस्वदा भरास्मभ्यमूतये महे। देवो

२र ३ २
ह्यसि नो दृशे॥१०

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः।

१ २३ १२
अमैरमित्रमर्दय॥११

३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् दूतं वो विश्ववेदसꣳ हव्यवाहममर्त्यम् ।

१ २ ३ २
यजिष्ठमृञ्जसे गिरा॥१२

१ २ ३ २ ३ २ ३ १ २ ३ २
ओ३म् उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः।

३ १ २र
वायोरनीके अस्थिरन्॥१३

१ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।

२ ३ १ २ ३ १ २
नमो भरन्त एमसि॥१४

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।

१ २ २ १ २ ३ २
स्तोमꣳ रुद्राय दृशीकम्॥१५

२ ३ १ २र ३ १ २ ३ २ ३ १ २
ओ३म् प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।

३ १ २ ३ १ २
मरुद्भिरग्न आ गहि॥१६

२ ३ २ ३ १२ ३ १ २ ३ १
ओ३म् अश्वं न त्वा वारवन्तं वन्दध्या अग्निं

२र ३ १ २ ३ १ २
नमोभिः। सम्राजन्तमध्वराणाम्॥१७

३ १ २र ३ १ २र ३ १
ओ३म् और्वभृगुवच्छुचिमप्नवानवदा हुवे । अग्निँ

२ ३ १ २
समुद्रवाससम्॥१८

३ १ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् अग्निमिन्धानो मनसा धियँ सचेत मर्त्यः ।

३ १ २ ३ १ २
अग्निमिन्धे विवस्वभिः॥१९

२र ३ २ ३ १ २ ३ १ २
ओ३म् आदित्प्रत्नस्य रेतसो ज्योतः पश्यन्ति

३ २ ३ २उ ३ १ २ ३ २
वासरम्। परो यदिध्यते दिवि॥२०

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।

२ ३ २ ३ १ २
अच्छा नप्त्रे सहस्वते॥२१

३ २ ३ १ २ ३ २ ३ २ ३ २ ३
ओ३म् अग्निस्तिग्मेन शोचिषा यँ सद्विश्वं

२ ऽ १ २ ३ १ २ ३ २

न्या३त्रिणाम्। अग्निर्नो वꣳसते रयिम्॥२२

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र

ओ३म् अग्ने मृड महाꣳ अस्यय आ देवयुं जनम्।

३ १ २ ३ २ ३ १ २

इयेथ बर्हिरासदम्॥२३

२ ३ १ २ ३ १ २ ३ १ २

ओ३म् अग्ने रक्षा णो अꣳहसः प्रति स्म देव

३ २ १ २ ३ १ २

रीषतः। तपिष्ठैरजरो दह॥२४

१ २ ३ १ २र ३ १ २

ओ३म् अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः ।

२ ३ १ २ ३ १ २

अरं वहन्त्याशवः॥२५

१ २ ३ १ २ ३ २

ओ३म् नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।

३ १ २

सुवीरमग्न आहुत॥२६

३ २ ३ २ ३ २ ३ १ २र ३ २ ३ २

ओ३म् अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्।

३ १ २र

अपाꣳ रेताꣳसि जिन्वति॥२७

३ २ ३ २उ ३ १ २ ३ १ २ ३ १
ओ३म् इममू षु त्वमस्माकꣳ सनिं गायत्रं

२र १ २ ३ २ ३ १ २
नव्याꣳसम्। अग्ने देवेषु प्र वोचः॥२८

१ २ ३ १ २ ३ १ २र १
ओ३म् तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः। स

२ ३ १ २
पावक श्रुधी हवम्॥२९

२ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।

२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे॥३०

२ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

३ १ २र १ २
दृशे विश्वाय सूर्यम्॥३१

३ २ ३ १ २र ३ १ २ ३ २
ओ३म् कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।

३ १ २ ३ १ २
देवममीवचातनम्॥३२

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् शं नो देवीरभिष्टये शं नो भवन्तु पीतये ।

२उ ३ १ २
शं योरभि स्रवन्तु नः॥३३

१ २ ३ १ २र ३ १ २
ओ३म् कस्य नूनं परीणसि धियो जिन्वसि सत्पते।

१ २ ३ १ २ ३ १ २
गोषाता यस्य ते गिरः॥३४

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।

१ २ ३ १ २
होतारꣳ रत्नधातमम्॥६०५

१ २ ३ १ २ ३ १ २
ओ३म् तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।

३ १ २
बृहच्छोचा यविष्ठ्य॥६६१

१ २ ३ २ ३ २ ३ १ २
ओ३म् स नः पृथु श्रवाय्यमच्छा देव विवाससि ।

३ १ २ ३ १ २
बृहदग्ने सुवीर्यम्॥६६२

२३क २र ३ २ ३ १ २ ३ १ २
ओ३म् यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।

२ ३ १ २
तत्रा योनिं कृणवसे॥७०६

१ २र ३ १ २ ३ १ २र २ ३
ओ३म् न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते । अथा

१ २
दुवो वनवसे॥७०७

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।

३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम्॥७९०

३ १ २ ३ १ २ ३ १ २
ओ३म् अग्निमग्निꣳ हवीमभिः सदा हवन्त

३ १ २ ३ १ २ ३ २
विश्पतिम्। हव्यवाहं पुरुप्रियम्॥७९१

१ २ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् अग्ने देवाꣳ इहा वह जज्ञानो वृक्तबर्हिषे ।

२ ३ १ २ ३ १ २
असि होता न ईड्यः॥७९२

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।

३ २३क २र
हव्यवाड्जुह्वास्यः॥८४४

१ २र ३ १ २ ३ १ २ ३ १ २ १ २
ओ३म् यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति। तस्य

३ १ २
स्म प्राविता भव॥८४५

२ ३ २ ३ १ ३ ३ १ २ ३ १ २
ओ३म् यो अग्निं देववीतये हविष्मा२ आविवासति।

१ २
तस्मै पावक मृडय॥८४६

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् अयं यथा न आभुवत्त्वष्टा रूपेव तद्या ।

३ २उ ३ १ २
अस्य क्रत्वा यशस्वतः॥९४७

३ १ २र ३ २उ ३ २ ३ १ २ २उ
ओ३म् अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते। आ

३ १ २
वाजैरुप नो गमत्॥९४८

३ २उ ३ २उ ३ २ ३ २ ३ १ २ ३ २
ओ३म् पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः।

३ १ २
समत्सु त्वा हवामहे॥११६७

३ २ ३ १ २र ३ १ २ १ ३
ओ३म् समत्स्वग्निमवसे वाजयन्तो हवामहे। वाजेषु

३ २ ३
चित्रराधसम्॥११६८

३ १ २ ३ १ २र ३ १ २ ३ २
ओ३म् उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये । आरे

३ १ २ ३ २
अस्मे च शृण्वते॥१३७९

१ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु।

१ २ ३ २ ३ १ २
अरक्षद्दाशुषे गयम्॥१३८०

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् स नो वेदो अमात्यमग्नी रक्षतु शन्तमः ।

३ २उ ३ १ २
उतास्मान्पात्वꣳहसः॥१३८१

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि ।

३ १ २र
धनञ्जयो रणेरणे॥१३८२

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् अच्छा नो याह्या वहाभि प्रयाꣳसि वीतये ।

२ ३ १ २र
आ देवान्त्सोमपीतये॥१३८४

१ २ ३ १ २र ३ १ २ २ ३
ओ३म् उदग्ने भारत द्युमदजस्रेण दविद्युतत्। शोचा

१ ३
वि भाह्यजर॥१३८५

१२ ३२ ३२ ३१ २ ३२ ३१२
ओ३म् गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे ।

१२३२ ३ २३ २
सीदन्नृतस्य योनिमा॥१३९७

१२ ३ २३१ २३ १२ ३ १२
ओ३म् ब्रह्म प्रजावदा भर जातवेदो विचर्षणे ।

२३ २३१२३२
अग्ने यद्दीदयद्दिवि॥१३९८

३१ २र ३२३१ २३ १२
ओ३म् अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।

३१ २ ३ १२
देवस्य द्रविणस्यवः॥१४०५

३१२ ३ २३ २३ १ २र३ २
ओ३म् अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।

१ २३२ ३ १२
स यक्षद्दैव्यं जनम्॥१४०६

१२ ३१२ ३ २३ २३ १२
ओ३म् त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।

१२ ३१ २र
त्वया यज्ञं वि तन्वते॥१४०७

१ २ ३ २उ ३ २ ३ १ २ ३ २ ३ २ २उ
ओ३म् यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः। स

३ १ २ ३ १ २
यन्ता शश्वतीरिषः॥१४१५

१ २ ३ १ २र
ओ३म् न किरस्य सहन्त्य पर्येता कयस्य चित् ।

१ २ ३ १ २
वाजो अस्ति श्रवाय्यः॥१४१६

१ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।

१ २ ३ १ २
विप्रेभिरस्तु सनिता॥१४१७

१ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः ।

२ ३ १ २ ३ १ २
आ देवान्वक्षि यक्षि च॥१४७५

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा ।

१ २ ३ १ २
अग्ने यज्ञेषु सुक्रतो॥१४७६

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् होता देवो अमर्त्यः पुरस्तादेति मायया ।

३ १ २ ३ १ २
विदथानि प्रचोदयन्॥१४७७

३ १ २र ३ २ ३ १ २
ओ३म् वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।

१ २ ३ २ ३ १ २
विप्रो यज्ञस्य साधनः॥१४७८

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।

१ २ ३ २ ३ १ २
दक्षस्य पितरं तना॥१४७९

३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक

३ २ ३ १ २
आ। सद्यो दाशुषे क्षरसि॥१४९८

१ २ ३ १ २र ३ १ २
ओ३म् आ नो भज परमेष्वा वाजेषु मध्यमेषु ।

२ ३ २ ३ १ २
शिक्षा वस्वो अन्तमस्य॥१४९९

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।

२ ३ १ २ ३ १ २
आ देवान्वक्षि यक्षि च॥१५२१

१ २ ३ १२ ३१२
ओ३म् तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।

३ २उ ३१२
देवाँ आ वीतये वह॥१५२२

३१२ ३२३ १२
ओ३म् वीतिहोत्रं त्वा कवे द्युमन्तँ समिधीमहि ।

१२ ३१२ ३२
अग्ने बृहन्तमध्वरे॥१५२३

१२ ३१२ ३२३ १२
ओ३म् अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।

१ २ ३१ २
विश्वासु धीषु वन्द्य॥१५२४

१ २ ३१ २ ३ २३ १२
ओ३म् आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।

१ २ ३ २ ३१२
विश्वासु पृत्सु दुष्टरम्॥१५२५

१ २ ३१२ ३२ ३ १२
ओ३म् आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम्।

३ १ २ ३१२
मार्डीकं धेहि जीवसे॥१५२६

३१ २ ३ २३
ओ३म् अग्निँ हिन्वन्तु नो धियः

१ २ ३ १ २ ३ १ २ १ २ ३
सप्तिमाशुमिवाजिषु। तेन जेष्म

१ २
धनंधनम्॥१५२७

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ १
ओ३म् यया गा आकरामहै सेनयाग्ने तवोत्या। तां

२ ३ १ २
नो हिन्व मघत्तये॥१५२८

१ २ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् आग्ने स्थूरꣳ रयिं भर पृथुं गोमन्तमश्विनम्।

३ २उ ३ १ २ ३ २
अङ्धि खं वर्तया पविम्॥१५२९

२ ३ १ २ ३ २ ३ १ २र ३ २
ओ३म् अग्ने नक्षत्रमजरमा सूर्यꣳ रोहयो दिवि ।

२ ३ २ ३ १ २
दधज्ज्योतिर्जनेभ्यः॥१५३०

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् ।

१ २ ३ २उ ३ १ २
बोधा स्तोत्रे वयो दधत्॥१५३१

१ २ ३ १ २ ३ २ ३ १ २ ३क २र
ओ३म् ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।

३ २ ३ २ ३ १ २
स्तोता स्यां तव शर्मणि॥१५३३

१ २ ३ १ २ ३ १ २ ३ १ ३र २ ३
ओ३म् उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते। तव

१ २ ३ १ २
ज्योतीꣳष्यर्चयः॥१५३४

१ २ ३ १ ३र ३ २ ३ २ ३क २र २
ओ३म् कस्ते जामिर्जनानामग्ने को दाश्वध्वरः। को

३ १ २ ३ २
ह कस्मिन्नसि श्रितः॥१५३५

२ ३ १ ३र ३ १ २ ३ १ २ ३ २
ओ३म् त्वं जामिर्जनानामग्ने मित्रो असि प्रियः।

२ ३ १ २ ३ १ २
सखा सखिभ्य ईड्यः॥१५३६

१ २ ३ १ ३र ३ १ २ ३ २ ३ २
ओ३म् यजा नो मित्रावरुणा यजा देवाꣳ ऋतं

३ २ २ ३ २ ३ १ ३र
बृहत्। अग्ने यक्षि स्वं दमम्॥१५३७

३ १ २ ३क २र ३ १ २र ३ २
ओ३म् ईडेन्यो नमस्यस्तिरस्तमाꣳसि दर्शतः।

२ ३ १ २ ३ १ २
समग्निरिध्यते वृषा॥१५३८

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् वृषो अग्निः समिध्यतेऽश्वो न देववाहनः ।

२ ३ १ २
तँ हविष्मन्त ईडते॥१५३९

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् वृषणं त्वा वयं वृषन्वृषणः समिधीमहि ।

२ ३ १ २ ३ २
अग्ने दीद्यतं बृहत्॥१५४०

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः ।

१ २ ३ १ २
अग्ने शुक्रास ईरते॥१५४१

१ २ ३ २ ऽ १ २ ३ १ २ १ २
ओ३म् उप त्वा जुह्वो३मम घृताचीर्यन्तु हर्यत। अग्ने

३ १ २
हव्या जुषस्व नः॥१५४२

३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् मन्द्रँ होतारमृत्विजं चित्रभानुं विभावसुम् ।

३ १ २ ३ १ २
अग्निमीडे स उ श्रवत्॥१५४३

१ २ ३ १ २ ३ १ २
ओ३म् कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् ।

१ २ ३ १ २
वराय देव मन्यवे॥१५४९

१ २ ३ २ ३ १ २ ३ १ २
ओ३म् दाशेम कस्य मनसा यज्ञस्य सहसो यहो ।

१ २ ३ १ २र
कदु वोच इदं नमः॥१५५०

१ ३ २उ ३ २ ३ १ २ ३ १ २
ओ३म् अधा त्व हि नस्करो विश्वा अस्मभ्यं

३ २ १ २ ३ १ २
सुक्षितीः। वाजद्रविणसो गिरः॥१५५१

१ २ ३ २ ३ २ ३ १ २र
ओ३म् अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।

२ ३ २ ३ २ ३ १ २
तूर्णी रथः सदा नवः॥१५५६

३ १ २र ३ १ २ ३ १ २ ३
ओ३म् अभि प्रयांसि वाहसा दाश्वां अश्नोति

१ २ १ २ ३ १ २
मर्त्यः। क्षयं पावकशोचिषः॥१५५७

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।

३ २ ३ १ २
अग्निस्तुविश्रवस्तमः॥१५५८

१ २ ३ १ २र ३ २ ३ १ २र
ओ३म् यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् ।

१ २ ३ १ २ ३ २
आपश्चिन्नि दधा पदम्॥१५७१

३ २ ३ १ २ ३ १ २र ३ १ २ ३ १
ओ३म् पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः। भद्रा

२र ३ २
सूर्य इवोपदृक्॥१५७२

१ २ ३ १ २ ३ २ ३ २ ३ १ २र
ओ३म् विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।

१ २
चनो घाः सहसा यहो॥१६१७

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ १
ओ३म् यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे

२र ३ २
इद्धूयते हविः॥१६१८

३ १ २ ३ २ ३ १ २ ३ १ २र
ओ३म् प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः।

३ २ ३ १ २ ३ २
प्रियाः स्वग्नयो वयम्॥१६१९

२ ३ २ ३ १२ ३ १ २ ३ १
ओ३म् अश्वं न त्वा वारवन्तं वन्दध्या अग्निं

२र ३ १ २ ३ १ २
नमोभिः। सम्राजन्तमध्वराणाम्॥१६३४

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः।

३ २ ३ १ २
मीढ्वाँ अस्माकं बभूयात्॥१६३५

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ २उ
ओ३म् स नो दूराच्चासाच्च नि मर्त्यादघायोः। पाहि

३ २ ३ १ २
सदमिद्विश्वायुः॥१६३६

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम्।

१ २ ३ १ २
उरुकृदुरु णस्कृधि॥१६४९

१ २ ३ १ २र ३ १ २
ओ३म् मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा।

३ २ ३ २ ३ १ २
संवर्गँ सँ रयिं जय॥१६५०

१ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः।

३ १ २र
धिये वाजाय हिन्वतु॥१६६४

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् स रेवा इव विश्पतिर्दैव्यः केतुः शृणोतु नः।

३ २ ३ २ ३ १ २
उक्थैरग्निर्बृहद्भानुः॥१६६५

१ २ ३ १ २ ३ १ २
ओ३म् उप त्वा रणवसंदृशं प्रयस्वन्तः सहस्कृत।

१ २ ३ २ ३ १ २
अग्ने ससृज्महे गिरः॥१७०५

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् उप च्छायामिव घृणेरगन्म शर्म ते वयम्।

२ ३ १ २
अग्ने हिरण्यसन्दृशः॥१७०६

२ ३ १ २ ३ २ ३ १ २ ३ १ २र
ओ३म् य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः।

२ ३ १ २ ३ १ २
अग्ने पुरो रुरोजिथ॥१७०७

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम्।

१ २ ३ १ २
अजस्रं घर्ममीमहे॥१७०८

२ ३ १ २ ३ २ ३ २ ३क २र ३ २
ओ३म् य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन्।

३ १ २र ३ २
ऋतूनुत्सृजते वशी॥१७०९

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
ओ३म् अग्निः प्रियेषु धामसु कामो भूतस्य

१ २ ३ २उ ३ १ २
भव्यस्य। सम्राडेको विराजति॥१७१०

३ २ ३ २ ३ १ २ ३ १ २ ३
ओ३म् अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वा३ँ

२ ३ १ २र
स्वाम्। कविर्विप्रेण वावृधे॥१७११

३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् ऊर्जो नपातमा हुवेऽग्निं पावकशोचिषम् ।

३ २ ३ १ २ ३ २
अस्मिन्यज्ञे स्वध्वरे॥१७१२

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा ।

३ १ २र ३ १ २
देवैरा सत्सि बर्हिषि॥१७१३

३ १ २र ३ २ ३ १ २र
ओ३म् अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति ।

१ २ ३ १ २
महिषीव वि जायते॥१८२५

१ २ ३ १ २ ३ २ ३ १ २
ओ३म् नमः सखिभ्यः पूर्वसद्भ्यो नमः

३ १ २ ३ १ २र
साकन्निषेभ्यः। युञ्जे वाचꣳ

३ १ २
शतपदीम्॥१८२८

३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्त्तनि ।

३ १ २र ३ १ २
गायत्रं त्रैष्टुभं जगत्॥१८२९

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता ।

३ १ २र ३ २
देवा ओकाꣳसि चक्रिरे॥१८३०

३ २उ ३ १ २ ३ २उ ३
ओ३म् अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो

२ ३ २ ३ १ २ २ ३ २ ३ २ ३
ज्योतिर्ज्योतिरिन्द्रः। सूर्यो ज्योतिर्ज्योतिः

१ २
सूर्यः॥१८३१

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् पुनरूर्जा नि वर्तस्व पुनरग्न इषायुषा ।

१ २ ३ १ २
पुनर्नः पाह्यꣳहसः॥१८३२

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
३ १ २ ३ २ ३ १ २
विश्वप्स्न्या विश्वतस्परि॥१८३३

## देवता-अग्निः पवमानः

२ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः।
३ १ २ ३ १ २
आरे बाधस्व दुच्छुनाम्॥६२७

२ ३ १ २ ३
ओ३म् अग्न आयूꣳषि पवस आसुवोर्जमिषं च नः ।
आरे बाधस्व दुच्छुनाम्॥१५१८

३ २उ ३ १ २ ३ १ २
ओ३म् अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
१ २ ३ २
तमीमहे महागयम्॥१५१९

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।

१ २ ३ २उ ३ १ २
दधद्रयिं मयि पोषम्॥१५२०

## देवता- अग्निः हर्वीषि वा

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् आ सुते सिञ्चत श्रियꣳ रोदस्योरभिश्रियम् ।
३ १ २ ३ २
रसा दधीत वृषभम्॥१४८०

१ २ ३ २ ३ २ ऽ २ ३ २ ३ २
ओ३म् ते जानत स्वमोक्यं३सं वत्सासो न
३ १ २ ३ १ २ ३ १ २
मातृभिः। मिथो नसन्त जामिभिः॥१४८१

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
१ २ ३ २उ ३क २र
इन्द्रे अग्ना नमः स्वः॥१४८२

३ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
३ १ २ ३ १ २
अवटस्य विसर्जने॥१६०३

३ १ २ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम् ।

३ १२ ३ १ २
नीचीनबारमक्षितम्॥१६०४

## देवता- अश्विनौ

२ ३ १ ३र ३ १ २ ३ २
ओ३म् या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।

३ २ ३ १ २ ३ १ २
धिया देवा वसुविदा॥१७२९

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि।

२ ३ २ ३ २ ३ १ २
यद्वा॑ रथो विभिष्पतात्॥१७३०

## देवता- अश्विनौ मित्रावरुणौ

३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ २
ओ३म् दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् । वि

३ २ ३ १ २
भानुं विश्वथातनत्॥२१९

## देवता- आदित्यः

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् प्रति वा॑सूर उदिते मित्रं गृणीषे वरुणम् ।

३ १ २ ३ १ २
अर्यमणँ रिशादसम्॥१०६७

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् राया हिरण्यया मतिरियमवृकाय शवसे ।

३ १ २र ३ १ २
इयं विप्रामेधसातये॥१०६८

१ २ ३ १ २ ३ १ २ ३ २
ओ३म् ते स्याम देव वरुण ते मित्र सूरिभिः सह ।

२ ३क २र
इषँ स्वश्च धीमहि॥१०६९

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।

३ १ २ ३ १ २र
सुवाति सविता भगः॥१३५१

३ १ २ ३ २उ ३ १ २र
ओ३म् सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।

१ २ १ २ ३ १ २
ये नो अँहोऽतिपिप्रति॥१३५२

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।

३ १ २र
महो राजान ईशते॥१३५३

## देवता- आपः

२ ३ १ २र ३ २ ३ १ २ ३ १
ओ३म् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे

२ ३ १ २र ३ १ २
दधातन। महे रणाय चक्षसे॥१८३७

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् यो वः शिवतमो रसस्तस्य भाजयतेह नः ।

३ १ २ ३ १ २
उशतीरिव मातरः॥१८३८

२ ३ १ २ ३ २ ३ १ २ ३
ओ३म् तस्मा अरं गमाम वो यस्य क्षयाय

१ २ १ २ ३ १ २
जिन्वथ। आपो जनयथा च नः॥१८३९

## देवता- इडः

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
ओ३म् अग्ने सुखतमे रथे देवाँ ईडित आ वह ।

२ ३ २ ३ १ २
असि होता मनुर्हितः॥१३५०

## देवता- इध्मः समिद्धो वाग्निः

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् सुषमिद्धो न आ वह देवाꣳ अग्ने हविष्मते।

१ २ ३ १ २
होतः पावक यक्षि च॥१३४७

देवता- इन्द्रः

१ २ ३ १ २र ३ २ ३ १ २ २उ
ओ३म् तद्वो गाय सुते सचा पुरुहूताय सत्वने । शं

३ २ ३ १ २
यद्गवे न शाकिने॥११५

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् यस्ते नूनꣳ शतक्रतविन्द्र द्युम्नितमो मदः ।

१ २ ३ १ २र
तेन नूनं मदे मदेः॥११६

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् गाव उप वदावटे महि यज्ञस्य रप्सुदा ।

३ १ २र ३ १ २
उभा कर्णा हिरण्यया॥११७

२ ३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् अरमश्वाय गायत श्रुतकक्षारं गवे ।

२ ३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने॥११८

१ २र ३ २ ३ २ ३ १ २ १
ओ३म् तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे। स

२र ३ १ २
वृषा वृषभो भुवत्॥११९

१ २ ३ २ ३ २ ३ १ २ ३ १ २र
ओ३म् त्वमिन्द्र बलादधि सहसो जात ओजसः ।

२र ३ १ २र
त्वꣳ सन्वृषन्वृषेदसि॥१२०

३ १ २र ३ २उ ३ १ २ ३ १
ओ३म् यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत्। चक्राण

२ ३ २ ३ २
ओपशं दिवि॥१२१

१ २ ३ २उ ३ १ २र ३ २ ३ २ ३ २
ओ३म् यदिन्द्राहं तथा त्वमीशीय वस्व एक इत् ।

३ २ ३ १ २
स्तोता मे गोसखा स्यात्॥१२२

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पन्यंपन्यमित्सोतार आ धावत मद्याय ।

१ २ ३ २ ३ १ २
सोमं वीराय शूराय॥१२३

३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २
ओ३म् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।

१ २ ३ १ २
अनाभयिन्नरिमा ते॥१२४

२उ ३ २ ३ १ २ ३ १ २र
ओ३म् उद्धेदभि श्रुतामघं वृषभं नर्यापसम् ।

१ २
अस्तारमेषि सूर्य॥१२५

२ ३ १ २र ३ १ २ ३ १ २ २ ३
ओ३म् यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य । सर्वं

१ २ ३ १ २
तदिन्द्र ते वशे॥१२६

१ २र ३ २ २ १ २ ३ २ ३ १ २
ओ३म् य आनयत्परावतः सुनीती तुर्वशं यदुम् ।

२ ३ २ ३ २ ३ १ २
इन्द्रः स नो युवा सखा॥१२७

१ २ ३ २ ऽ २ ३ १ २ ३ १
ओ३म् मा न इन्द्राभ्या३दिशः सूरो अक्तुष्वा

२र २ ३ १ २ ३ २
यमत। त्वा युजा वनेम तत्॥१२८

१ २ ३ २ ३ २ ३ १ २
ओ३म् एन्द्र सानसिं रयिं सजित्वानं

३ १ २ १ २ ३ १ २
सदासहम्। वर्षिष्ठमूतये भर॥१२९

१ २ ३ १ २ ३ २उ ३ १ २ १ २
ओ३म् इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे। युजं

३ १ २ ३ १ २
वृत्रेषु वज्रिणम्॥१३०

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।

१ २ ३ १ २
तत्राददिष्ट पौꣳस्यम्॥१३१

३ १ २ ३ २ ३ १ २र
ओ३म् वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन् ।

३ २ ऽ १ २
विद्धी त्वा३स्य नो वसो॥१३२

२ ३ २ ३ २ ३ १२ ३ १ २
ओ३म् आ घा ये अग्निमिन्धते स्तृणन्ति

३ १ २ ३ २ २ ३ २ ३ २ ३ १ २
बर्हिरानुषक्। येषामिन्द्रो युवा सखा॥१३३

३ २उ ३ २ ३ २ ३ २ ३ १ २ ३ १
ओ३म् भिन्धि विश्वा अप द्विषः परि बाधो जही

२र १ २ ३ १ २र
मृधः। वसु स्पार्हं तदा भर॥१३४

३ १ २ ३ २ ३ १ २ ३ १ २र १
ओ३म् इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि

२र ३ १ २
यामं चित्रमृञ्जते॥१३५

३ १ २ ३ १ २ ३ १ २
ओ३म् इम उ त्वा वि चक्षते सखाय इन्द्र

३ १२ ३ १२ ३ १ २ ३ २
सोमिनः। पुष्टावन्तो यथा पशुम्॥१३६

१ २ ३ २३ २ ३ १ २ ३ १ २
ओ३म् समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः।

३ १२३ १ २
समुद्रायेव सिन्धवः॥१३७

३ २ ३ १ २र ३ १ २र ३ २
ओ३म् देवानामिदवो महत्तदा वृणीमहे वयम् ।

१ २ ३ १ २ ३ १ २
वृष्णामस्मभ्यमूतये॥१३८

३ २ ३ १२ ३ १ २
ओ३म् सोमाना॰ स्वरणं कृणुहि ब्रह्मणस्पते ।

३ १२ ३ १ २ ३ २
कक्षीवन्तं य औशिजः॥१३९

१ २ ३ १२ ३ १ २र
ओ३म् बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः ।

३ १२ ३ २ ३ १२
शृणोतु शक्र आशिषम्॥१४०

३ १ २ ३ १२ ३
ओ३म् अद्य नो देव सवितः प्रजावत्सावीः

१ २ १ २ ३ १ २
सौभगम्। परा दुःष्वप्न्यꣳ सुव॥१४१

२ ऽ १ २ ३ १ ३र ३ २ ३ १ २
ओ३म् क्वा३स्य वृषभो युवा तुविग्रीवो अनानतः ।

३ १ ३र
ब्रह्मा कस्तꣳ सपर्यति॥१४२

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् उपह्वरे गिरीणाꣳ सङ्गमे च नदीनाम् ।

३ १ ३र
धिया विप्रो अजायत॥१४३

२ ३ १ २ ३ १ ३र ३ १ २
ओ३म् प्र सम्राजं चर्षणीनामिन्द्रꣳ स्तोता नव्यं

३ २ १२ ३ २३ १ २
गीर्भिः। नरं नृषाहं मꣳहिष्ठम्॥१४४

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अपादु शिप्रयन्धसः सुदक्षस्य प्रहोषिणः ।

२ ३ २ ३ १ २
इन्द्रोरिन्द्रो यवाशिरः॥१४५

३ १ २ ३ १ ३र ३ १२
ओ३म् इमा उ त्वा पुरुवसोऽभि प्र नोनवुर्गिरः ।

१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः॥१४६

२उ ३ १ २ ३ २ ३ १ २ ३क २र
ओ३म् अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे॥१४७

२उ ३ १ २ ३ १ २ ३ २ ३ १ २र १ २
ओ३म् यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः। तत्र

३ १ २ ३ १ २
पूषाभुवत्सचा॥१४८

१ २ ३ १ २ ३ २ ३ १ २
ओ३म् उप नो हरिभिः सुतं याहि मदानां पते ।

१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम्॥१५०

३ १ २र ३ १ २ ३ १ २ ३ २
ओ३म् इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे ।

१ २ ३ १ २र
अच्छावभृथमोजसा॥१५१

३ २उ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।

३ १ २र
अहꣳ सूर्य इवाजनि॥१५२

३ १ २ ३ २३ १ २ ३ १ २
ओ३म् रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

३ २ ३ २ ३ १२
क्षुमन्तो याभिर्मदेम॥१५३

१ २ ३ १ २ ३ १ २ ३ २
ओ३म् सोमः पूषा च चेततुर्विश्वासाꣳ सुक्षितीनाम्।

३ २ ३क २र ३ २
देवत्रा रथ्योर्हिता॥१५४

२ ३ १ २३ १२३ १२
ओ३म् प्र व इन्द्राय मादनꣳ हर्यश्वाय गायत ।

१ २ ३ १२
सखायः सोमपाव्ने॥१५६

३ १ २ ३ १२ ३ १ २ ३ २ ३ १ २
ओ३म् वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।

१ २ ३ १ २
कण्वा उक्थेभिर्जरन्ते॥१५७

१ २३ १२ ३ १ २र ३ १२
ओ३म् इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।

३ १ २ ३ १ २
अर्कमर्चन्तु कारवः॥१५८

३ १ २ ३ २ ३ १२ ३ १ २ ३ १ २
ओ३म् अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।

१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब॥१५९

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् सुरूप कृत्नुमूतये सुदुघामिव गोदुहे ।

३ २ ३ १ २
जुहूमसि द्यविद्यवि॥१६०

३ १ २ ३ २ ३ १ २
ओ३म् अभि त्वा वृषभा सुते सुतꣳ सृजामि

३ १ २ ३ १ २ ३ १ २
पीतये। तृम्पा व्यश्नुही मदम्॥१६१

१ २ ३ १ २र ३ १ २ ३ २
ओ३म् य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः ।

१ २र ३ १ २
पिबेदस्य त्वमीशिषे॥१६२

१ २ ३ १ २ ३ १ २
ओ३म् योगेयोगे तवस्तरं वाजेवाजे हवामहे ।

१ २ ३ १ २ ३ १ २
सखाय इन्द्रमूतये॥१६३

२उ ३ १ २ ३ १ २ ३ १ २र
ओ३म् आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।

१ २ ३ १ २
सखायः स्तोमवाहसः॥१६४

३ १ २र ३ १ २ २ ३
ओ३म् इदꣳ ह्यन्वोजसा सुतꣳ राधानां पते । पिबा

३ २ १ २
त्वा३स्य गिर्वणः॥१६५

३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् महाꣳ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे ।

१ २र ३ १ २र
द्यौर्न प्रथिना शवः॥१६६

१ २र ३ १ २ ३ २ ३ १
ओ३म् आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभꣳ सं

२र ३ १ २र
गृभाय। महाहस्ती दक्षिणेन॥१६७

३ १ २र ३ १ २ ३ १ २ ३ २
ओ३म् अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।

३ २ ३ २ ३ १ २
सूनुꣳ सत्यस्य सत्पतिम्॥१६८

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् कया नश्चित्र आ भुवदूती सदावृधः सखा ।

२ ३ १ २ ३ २
कया शचिष्ठया वृता॥१६९

१ २ ३ ३ १ २ ३ १ २
ओ३म् त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।

१ २ ३ १ २
आ च्यावयस्यूतये॥१७०

१ २ ३ २ ३ १ २ ३ १ ३र ३ १ २
ओ३म् सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।

३ २ ३ १ २
सनिं मेधामयासिषम्॥१७१

२ ३ १ २ ३ २ ३ २उ ३क २र ३ १ २
ओ३म् ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।

३ १ २ ३ १ २
उत श्रोषन्तु नो भुवः॥१७२

३ १ २ ३ २ ३ २ ३ १ २
ओ३म् भद्रंभद्रं न आ भरेषमूर्जꣳ शतक्रतो ।

१ २ ३ १ २
यदिन्द्र मृडयासि नः॥१७३

२ ३ १ २ ३ २ ३ १ २र
ओ३म् अस्ति सोमो अयꣳ सुतः पिबन्त्यस्य

३ १ २ ३ २ ३ १ २ ३ १ २
मरुतः। उत स्वराजो अश्विना॥१७४

३ १ २ ३ २ ३ १ २ ३ १ २र
ओ३म् ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते ।

३ १ २ ३ १ २
वन्वानासः सुवीर्यम्॥१७५

ओ३म् नकि देवा इनीमसि न क्या योपयामसि ।

मन्त्रश्रुत्यं चरामसि॥१७६

ओ३म् दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण। स्तुहि

देवꣳ सवितारम्॥१७७

ओ३म् एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।

स्तुषे वामश्विना बृहत्॥१७८

ओ३म् इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।

जघान नवतीर्नव॥१७९

ओ३म् इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।

महाꣳ अभिष्टिरोजसा॥१८०

ओ३म् आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।

३ २ ३ १ २ ३ १ २
महान्महीभिरूतिभिः॥१८१

२ ३ १ २ ३ २३ ३ १ २
ओ३म् ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।

२ ३ १ २ ३ १ ३
इन्द्रश्चर्मेव रोदसी॥१८२

३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् अयमु ते समतसि कपोत इव गर्भधिम् ।

२ ३ १ २
वचस्तच्चिन्न ओहसे॥१८३

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् वात आ वातु भेषजꣳ शम्भु मयोभु नो

३ २ २ ३ १ २
हृदे। प्र न आयूꣳषि तारिषत्॥१८४

१ २र ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् यꣳ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा।

२ ३ १ २ ३ १ २
न किः स दभ्यते जनः॥१८५

३ २३ ३ १ २ ३ २ ३ १ २र ३ २
ओ३म् गव्यो षु णो यथा पुराश्वयोत रथया ।

३ २ ३ १ २
वरिवस्या महोनाम्॥१८६

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।

३ २ ३ १ ३ १ २
एनामृतस्य पिप्युषीः॥१८७

३ २ ३ १ २ ३ १ २र
ओ३म् अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।

१ २र ३ १ २
यत्सोमेसोम आभुवः॥१८८

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पावका नः सरस्वती वाजेभिर्वाजिनीवती ।

३ १ २ ३ १ २
यज्ञं वष्टु धियावसुः॥१८९

२ ३ १ २र ३ २उ ३ १ २
ओ३म् क इमं नाहुषीष्वा इन्द्रꣳ सोमस्य तर्पयात्।

२ ३ २ ३ १ २
स नो वसून्या भरात्॥१९०

१ २ ३ २उ ३ २ ३ २ ३ १ २
ओ३म् आ याहि सुषुमा हि त इन्द्र सोमं पिबा

३ २ २उ ३ १ २ ३ १ २
इमम्। एदं बर्हिः सदो मम॥१९१

१ २ ३ १ २र ३ २ ३ १ २ ३ २
ओ३म् महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः ।

३ २ ३ १ २
दुराधर्षं वरुणस्य॥१९२

१ २ ३ १ २ १ २
ओ३म् त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मसि
स्थातर्हरीणाम्॥१९३

१ २ ३ १ २ ३ १ २र
ओ३म् उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः।
१ २ ३ १ २
अव ब्रह्मद्विषो जहि॥१९४

१ २ ३ १ २ ३ २उ ३ १ २
ओ३म् गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
२ ३ १ २ ३ १ २र
इन्द्र त्वादातमिद्यशः॥१९५

१ २ ३ २ ३ १ २ ३ २उ ३ १ २र ३ २
ओ३म् सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन्।
२ ३ २ ३ २उ ३ १ २
न देवो वृतः शूर इन्द्रः॥१९६

१ २ ३ १ २ ३ १ २ ३ १ २ २उ
ओ३म् आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः। न
३ १ २
त्वामिन्द्राति रिच्यते॥१९७

२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।

२ ३ १ २
इन्द्रं वाणीरनूषत॥१९८

१ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् इन्द्र इषे ददातु न ऋभुक्षणमृभुꣳ रयिम् ।

३ १ २ ३ १ २
वाजी ददातु वाजिनम्॥१९९

१ २ ३ २ ३ २ ३ २ ३ १ २र ३उ
ओ३म् इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत्। स

३ १ २र
हि स्थिरो विचर्षणिः॥२००

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः ।

१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः॥२०१

२ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् इन्द्रा नु पूषणा वयꣳ सख्याय स्वस्तये ।

३ २ ३ १ २
हुवेम वाजसातये॥२०२

१ २ ३ १ २र ३ १ २र
ओ३म् न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति

२ ३ २उ ३ २
वृत्रहन्। न क्येवं यथा त्वम्॥२०३

३ १ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् तरणिं वो जनानां त्रदं वाजस्य गोमतः ।

३ २ ३ १ २
समानमु प्र शꣳसिषम्॥२०४

१ २ ३ २ ३ २ ३ १ २र
ओ३म् असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।

३ १ २ ३ १ २र
सजोषा वृषभं पतिम्॥२०५

३ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २
ओ३म् सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।

३ २उ ३ १ २
मित्रास्पान्त्यद्रुहः॥२०६

२ ३ १ २ ३ २ ३ १ २र ३ १ २
ओ३म् यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।

१ २ ३ १ २र
वसु स्पार्हं तदा भर॥२०७

३ १ २ ३ १ २ ३ १ २र ३ २
ओ३म् श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् ।

३ २ ३ १ २ ३ २
आशिषे राधसे महे॥२०८

१२ ३ १२ ३ १ २ ३ १ २
ओ३म् अरं त इन्द्र श्रवसे गमेम शूर त्वावतः ।

१ २ ३ १ २
अरꣳ शक्र परेमणि॥२०९

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।

१ २ ३ १ २
इन्द्र प्रातर्जुषस्व नः॥२१०

३ १ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।

२ ३ १ २र ३ १ २
विश्वा यदजय स्पृधः॥२११

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः।

१ २
तेषां मत्स्व प्रभूवसो॥२१२

१ २ ३ २ ३ १ २ ३ २
ओ३म् तुभ्यꣳ सुतासः सोमाः स्तीर्णं

३ १ २ ३ १ २
बर्हिर्विभावसो। स्तोतृभ्य इन्द्र मृडय॥२१३

२ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् आ व इन्द्रं कृविं यथा वाजयन्तः

३ १ २   १ २   ३ १ २
शतक्रतुम्। मꣳहिष्ठꣳ सिञ्च इन्दुभिः॥२१४

१ २   ३ १   ३र   ३ १ २   ३ २
ओ३म् अतश्चिदिन्द्र न उपा याहि शतवाजया। इषा

३ १ २
सहस्रवाजया॥२१५

२ ३ १ २ ३ १ २   ३ १ २ ३ २
ओ३म् आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि

३ १ २   २ ३ १   ३र
मातरम्। क उग्राः के ह शृण्विरे॥२१६

३ १ २   ३ १ २   ३ १ २   १ २
ओ३म् बृबदुक्थꣳ हवामहे सृप्रकरस्नमूतये । साधः

३ २ ३ १ २
कृण्वन्तमवसे॥२१७

३   २ ३ १ २   ३ १ २   ३ २
ओ३म् ऋजुनीती नो वरुणो मित्रो नयति विद्वान् ।

३   २ ३ २   ३ १ २
अर्यमा देवैः सजोषाः॥२१८

१   २   ३ १ ३र
ओ३म् आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।

२ ३ १ २
मध्वा रजाꣳसि सुक्रतू॥२२०

१ २ ३ १ २ ३ २ ३ १२र
ओ३म् अतीहि मन्युषाविणꣳ सुषुवाꣳसमुपेरय ।

३ २ ३ २ ३ १ २
अस्य रातौ सुतं पिब॥२२३

२ ३ १ २ ३ १ २र ३ १ २
ओ३म् कद्रु प्रचेतसे महे वचो देवाय शस्यते ।

१ २र ३ १ २
तदिध्यस्य वर्धनम्॥२२४

३ २ ३ २ ३ १ २ ३ १ २ ३ १
ओ३म् उक्थं च न शस्यमानं नागो रयिरा

२र १ २ ३ २ ३ १ २
चिकेत। न गायत्रं गीयमानम्॥२२५

१ २ ३ २ ३ १ २ १ १ २ ३
ओ३म् इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च

१ २ १ २ ३ २ ३ १ २
वाजपतिः। हरिवान्त्सुतानाꣳ सखा॥२२६

२ ३ १ २ ३ १ २र ३ १ २
ओ३म् आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः ।

३ १ ३ २ १ २
महाꣳ इव युवजानिः॥२२७

३ १ २ ३ १ २र १ २र ३ १
ओ३म् कदा वसो स्तोत्रं हर्यत आ अव श्मशा

२ ३ २ ३ २ ३ २ ३ १ २
रुधद्वाः। दीर्घं सुतं वाताप्याय॥२२८

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
ओ३म् ब्राह्मणादिन्द्र राधसः पिबा सोममृतूं रनु ।
२ ३ २ ३ १ २र
तवेदं सख्यमस्तृतम्॥२२९

३ १ २ ३ १ २ ३ १२
ओ३म् वयं घा ते अपि स्मसि स्तोतार इन्द्र
१ २
गिर्वणः। त्वं नो जिन्व सोमपाः॥२३०

१ २ ३ १ २र ३ २ ३ १ २
ओ३म् एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः ।
१ २ ३ १ २
सत्राजिदुग्र पौंस्यम्॥२३१

३ १ २र ३ २ ३ १ २र ३ २ ३ २ ३ २
ओ३म् एवा ह्यसि वीरयुरेवा शूर उत स्थिरः। एवा
३ २ ३ १ २
ते राध्यं मनः॥२३२

२ ३ २ ३ २ ३ १ २ ३ २उ ३ २ ३क २र
ओ३म् यस्येदमा रजोयुजस्तुजे जने वनं स्वः ।
१ २ ३ १ २ ३ २
इन्द्रस्य रन्त्यं बृहत्॥५८८

२ ३ १ २ ३ २ ३ १ २
ओ३म् त्वमेतदधारयः कृष्णासु रोहिणीषु च ।

१ २ ३ २ ३ १ २
परुष्णीषु रुशत्पयः॥५९५

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा।

१ २ ३ १ २ ३ १ २
इन्द्रो वज्री हिरण्ययः॥५९७

२ ३ १ २ ३ १ २ ३ २
ओ३म् इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र

३ १ २ ३ १ २
उग्राभिरूतिभिः॥५९८

१ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना।

२ ३ १ २
उप ब्रह्माणि नः शृणु॥६६७

३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र

३ १ २ ३ १ २
सोमिनः। सुतावन्तो हवामहे॥६६८

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः।

३ १ २ ३ २ ३ १ २
दृढा चिदारुजे वसु॥६८३

३ १ २ ३ १ २ ३ १ ऽ १ २ २ ३
ओ३म् पुरुहूतं पुरुष्टुतं गाथान्या३ऽसनश्रुतम्। इन्द्र

१ २
इति ब्रवीतन॥७१४

२ ३ १ २ ३ १ २ ३ १ २र ३ २
ओ३म् इन्द्र इन्नो महोनां दाता वाजानां नृतुः ।

३ १ २ ३ १ २
महाऽ अभिज्ञ्वा यमत्॥७१५

२उ ३ २ ३ १ २ ३ २ ३ २उ ३ १ २
ओ३म् शऽसेदुक्थऽ सुदानव उत द्युक्षं यथा नरः।

३ २ ३ १ २
चकृमा सत्यराधसे॥७१७

१ २ ३ २उ ३ १ २ १
ओ३म् त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो । त्वऽ

२ ३ १ २
हिरण्ययुर्वसो॥७१८

१ २ ३ १ २र ३ १ २ ३ २ ३ १ २
ओ३म् न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।

२र ३ १ २
तवेदु स्तोमैश्चिकेत॥७२०

ओ३म् इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति।

यन्ति प्रमादमतन्द्राः॥७२१

ओ३म् यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त

सꣳसदः। इन्द्रꣳ सुते हवामहे॥७२३

ओ३म् त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।

तमिद्वर्धन्तु नो गिरः॥७२४

ओ३म् शचिगो शचिपूजनायꣳ रणाय ते सुतः ।

आखण्डल प्र हूयसे॥७२६

ओ३म् यस्ते शृङ्गवृषो णपात्प्रणपात्कुण्डपाय्यः ।

न्यस्मिं दध्र आ मनः॥७२७

ओ३म् विद्मा हि त्वा तुवि कूर्मिं तुविदेष्णां

३ १ २ ३ १ २र
तुवीमघम्। तुविमात्रमवोभिः॥७२९

१ २र ३ १ २र ३ १ २
ओ३म् न हि त्वा शूर देवा न मर्तासो दित्सन्तम् ।

३ २उ ३ १ २
भीमं न गां वारयन्ते॥७३०

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
ओ३म् मा त्वा मूरा अविष्यवो मोपहस्वान आ

२ १ २ ३ १ २
दभन्। मा कीं ब्रह्मद्विषं वनः॥७३२

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इह त्वा गोपरीणसं महे मन्दन्तु राधसे ।

१ २ ३ १ २र
सरो गौरो यथा पिब॥७३३

१ २ ३ २ ३ २उ ३ २ ३ २ ३ १ २
ओ३म् नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः ।

२ ३ २ ३ २ ३ १ २
अश्वो न निक्तो नदीषु॥७३५

२ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् तं ते यवं यथा गोभिः स्वादुमकर्म

३ १ २ १ २ ३ १ २ ३ १ २
श्रीणन्तः। इन्द्र त्वास्मिंत्सधमादे॥७३६

२ ३ १ २ ३ १ २र ३ १ २र ३क २र
ओ३म् यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् ।

१ २
स त्वा ममत्तु सोम्य॥७३८

१ २ ३ २उ ३ १ २ ३ १ २ २
ओ३म् प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः। प्र

३ १ २ ३ १ २
बाहू शूर राधसा॥७३९

३ १ २ ३ १ २र ३ १ २ २ ३
ओ३म् पुरूतमं पुरूणामीशानं वार्याणाम् । इन्द्रꣳ

२ ३ १ २ ३ २
सोमे सचा सुते॥७४१

१ २ ३ २ ३ १ २ ३ २ ३ १
ओ३म् स घा नो योग आ भुवत्स राये स

२र २ ३ १ २ ३ १ २र
पुरन्ध्या। गमद्वाजेभिरा स नः॥७४२

१ २ ३ १ २र ३ १ २ ३ १ २र २
ओ३म् अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् । यं

३ १ २ ३ २ ३ २
ते पूर्वं पिता हुवे॥७४४

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।

१ २ ३ १ २ ३ १ २
वाजेभिरुप नो हवम्॥७४५

१ २ ३ २ ३ १ २ ३ १ २र ३ २
ओ३म् इन्द्रो दीर्धाय चक्षस आ सूर्यं रोहयद्दिवि।

२उ ३ १ २
वि गोभिरद्रिमैरयत्॥७९९

१ २ ३ १ २र ३ १
ओ३म् इन्द्रेण सं हि दृक्षसे संजग्मानो

२र ३ १ २ ३ १ २
अबिभ्युषा। मन्दू समानवर्चसा॥८५०

३ १ २ ३ ३ १ २ ३ १ २
ओ३म् वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।

१ २ ३ २ ३ १ २
अविन्द उस्रिया अनु॥८५२

३ १ २र ३ २उ ३ १ २ ३ १ २
ओ३म् इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।

१ २ ३ १ २
तद्विदच्छर्यणावति॥९१४

३ २ ३ १ २ ३ २ ३ १ २र
ओ३म् उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः ।

१ २ ३ २ ३ २
सोममिन्द्र चमू सुतम्॥९८८

१ २ ३ १ २ ३ १ २र
ओ३म् अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।

२ ३ १ २ ३ १ २
इन्द्र यद्दस्युहाभवः॥९८९

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।

२ ३ १ २३क २र
इन्द्रात्परितन्वं ममे॥९९०

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २ १ २
ओ३म् यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति। वसु

३ १ २र
स्पार्हं तदाभर॥१०७१

२ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् आ घ त्वावां त्मना युक्तः स्तोतृभ्यो

३ २ ३ २उ ३ २ ३क २र
धृष्णावीयानः। ऋणोरक्षं न चक्रयोः॥१०८५

१ २र ३ १ २र ३ २
ओ३म् आ यद्दुवः शतक्रतवा कामं जरितृणाम् ।

३ २उ ३ १ २र
ऋणोरक्षं न शचीभिः॥१०८६

१ २ ३ २ ३ १ २ ३ १ २
ओ३म् उप नः सवना गहि सोमस्य सोमपाः पिब।

३ २उ ३ २ ३ १ २
गोदा इद्रेवतो मदः॥१०८८

१ २ ३ १ २ ३ १ २ ३ २
ओ३म् अथा ते अन्तमानां विद्याम सुमतीनाम् ।

२ ३ १ २ ३ १ २
मा नो अति ख्य आ गहि॥१०८९

१ २र ३ २ ३ २ ३ १ २
ओ३म् इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।

१ २ ३ १ २ ३ १ २
अण्वीभिस्तना पूतासः॥११४६

१ २र ३ २ ३ १ २र ३ १ २
ओ३म् इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।

२ ३ १ २ ३ १ २
उप ब्रह्माणि वाघतः॥११४७

१ २र ३ १ २ ३ २ ३ १ २
ओ३म् इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।

३ १ २ ३ १ २
सुते दधिष्व नश्चनः॥११४८

१ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् तमीडिष्व यो अर्चिषा वना विश्वा

३ १ २ ३ २ ३ १ २ ३ १ २
परिष्वजत्। कृष्णा कृणोति जिह्वया॥११४९

२ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।

३ १ २ ३ १ २ ३ २
द्युम्नाय सुतरा अपः॥११५०

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् ता नो वाजवतीरिष आशून्पिपृतमर्वतः ।

१ २ ३ २ ३ १ २
एन्द्रमग्निं च वोढवे॥११५१

३ २उ ३ १ २र ३ १ २ ३ १
ओ३म् महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ

२ १ २ ३ १ २
इव। स्तोमैर्वत्सस्य वावृधे॥१३०७

२ ३ २ ३ १ २र ३ १ २ ३ २ ३
ओ३म् कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य

१ २ ३ १ २ ३ १ २
साधनम्। जामि ब्रुवत आयुधा॥१३०८

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।

१ २ ३ २ ३ १ २
विप्रा ऋतस्य वाहसा॥१३०९

३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २र
ओ३म् बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः ।

२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा॥१३३९

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १ २
ओ३म् अयुद्ध इद्युधा वृतꣳ शूर आजति सत्वभिः।

२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा॥१३४०

२उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् य एक इद्विदयते वसु मर्त्ताय दाशुषे ।

१ २ ३ १ २ ३ १ २ ३ २
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥१३४१

३ २ ३ १ २ ३ २ ३ १ २ ३ १
ओ३म् पदा पणीनराधसो नि बाधस्व महाꣳ

२ २उ ३ २ ३ १ २र
असि। न हि त्वा कश्च न प्रति॥१३५५

१ २ ३ २ ३ २ ३ १ २र २उ
ओ३म् त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् । त्वꣳ

३ १ २
राजा जनानाम्॥१३५६

२ ३ १ २ ३ १ २र ३ १ २ ३क २र
ओ३म् नव यो नवतिं पुरो बिभेद बाह्वोजसा ।

१ २ ३ १ २
अहिं च वृत्रहावधीत्॥१४५१

२ ३ १ २ ३ १ ३र ३ २ ३ १ २
ओ३म् स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।

३ १ २
उरुधारेव दोहते॥१४५२

३ १ २ ३ १ २ ३ १ ३र ३ १ २ ३ १ २
ओ३म् युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।

१ २ ३ २ ३ २
रोचन्ते रोचना दिवि॥१४६८

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।

१ २ ३ २ ३ १ २
शोणा धृष्णू नृवाहसा॥१४६९

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।

२ ३ १ २
समुषद्भिरजायथाः॥१४७०

१ ३र ३ १ २ ३ १ २ ३ १ २
ओ३म् आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।

२ ३ २ ३ १ २
यत्राभि संनवामहे॥१४९०

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।

१ २ ३ २ ३ २
यत्सीमुपह्वरे विदत्॥१४९१

३ २ ३ २ ३ १ २ ३ १ २
ओ३म् अहं प्रत्नेन जन्मना गिरः शुम्भामि

३ २ २उ ३ २ ३ २ ३ २
कण्ववत्। येनेन्द्रः शुष्ममिद्दधे॥१५०१

१ २र ३ १ २ ३ १ २र ३ १ २ ३ २
ओ३म् ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः ।

१ २र ३ १ २
ममेद्वर्धस्व सुष्टुतः॥१५०२

२ ३ १ २ ३ १ २र
ओ३म् कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।

१ २ ३ २ ३ १ २
कया स्तोतृभ्य आ भर॥१५८६

३ १ २ ३ १ २ ३ १ २
ओ३म् स्तोत्रꣳ राधानां पते गिर्वाहो वीर यस्य ते ।

१ २ ३ १ २
विभूतिरस्तु सूनृता॥१६००

३ १ २ ३ २ ३ १ २र २ ३ १ २
ओ३म् ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।

२ ३ १ २
समन्येषु ब्रवावहै॥१६०१

१ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।

३ १ २ ३ १ २
अस्माकमस्तु केवलः ॥१६२०

१ २ ३ २ ३ १ ३र ३ १ २
ओ३म् स नो वृषन्नमुं चरुꣳ सत्रादावन्नपा वृधि ।

३ २ ३ १ २
अस्मभ्यमप्रतिष्कुतः॥१६२१

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् वृषा यूथेव वꣳसगः कृष्टीरियर्त्योजसा।

१ २ ३ १ २
ईशानो अप्रतिष्कुतः॥१६२२

२ ऽ १ २ ३ २ ३ १ २ ३ २
ओ३म् व्या३न्तरिक्षमतिरन्मदे सोमस्य रोचना ।

२ ३ १ ३र ३ २
इन्द्रो यदभिनद्वलम्॥१६४०

१ ३र ३ १ २ ३ २ ३ १ ३र
ओ३म् उद्गा आजदङ्गिरोभ्य आवि ष्कृणवन्गुहा

३ २ ३ १ २ ३ २
सतीः। अर्वाञ्चं नुनुदे वलम्॥१६४१

३ १ ३र ३ १ २ ३ १ ३र
ओ३म् युध्मꣳ सन्तमनर्वाणꣳ सोमपामनपच्युतम् ।

१ २ ३ १ २
नरमवार्यक्रतुम्॥१६४३

१ २ ३ २३ ३ २ ३ १
ओ३म् शिक्षा ण इन्द्र राय आ पुरु विद्वाँ

१ १ २ ३ २ ३ १ २
ऋचीषम। अवा नः पार्ये धने॥१६४४

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना।

१ २ ३ १ २
वज्रेण शतपर्वणा॥१६५२

१ २ ३ १ २ ३ २ ३ १ २र ३ २
ओ३म् सरूप वृषन्ना गहीमौ भद्रौ धुर्याविभि ।

२ ३ १ २र
ताविमा उप सर्पतः॥१६५५

२र ३ १ २ ३ २ ३ १ २
ओ३म् नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति ।

१ २ ३ १ २ ३ २
शृङ्गेभिर्दशभिर्दिशन्॥१६५६

१ २ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम्।

१ २ ३ १ २र
इन्द्रं गीर्भिर्गिर्वणसम्॥१६५८

१ २ ३ २ ३ १ २र ३ २उ ३ २
ओ३म् पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् ।

१ २ ३ १ २
नि यमते शतमूतिः॥१६५९

३ १ २ ३ १ २ ३ १ २र
ओ३म् विव्यक्थ महिना वृषन्भक्षं सोमस्य

१ २ ३ १ २
जागृवे। य इन्द्र जठरेषु ते॥१६६१

१ २ ३ २ ३ १ २
ओ३म् अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् ।

२ ३ १ २ ३ १ २
अरं धामभ्य इन्दवः॥१६६२

२ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् न घा वसुर्नि यमते दानं वाजस्य गोमतः ।

२ ३ २ ३ २ ३ १ २
यत्सीमुपश्रवद्गिरः॥१६६७

३ १ २ ३ २उ ३ १ २र ३ १
ओ३म् कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा

२र १ २ ३ १ २
गमत्। शचीभिरप नो वरत्॥१६६८

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् तुविशुष्म तुविक्रतो शचीवो विश्वया मते ।

१ २ ३ २
आ पप्राथ महित्वना॥१७७२

१ २ ३ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् यस्य ते महिना महः परि ज्मायन्तमीयतुः।

२ ३ १ २ ३ १ २
हस्ता वज्रं हिरण्ययम्॥१७७३

३ १ २र ३ १ २ ३ १ २र ३ १ २
ओ३म् द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः ।

१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम्॥१७९१

१ २र ३ १ २र ३ १ २ १ २
ओ३म् त्वं हि वृत्रहन्नेषां पाता सोमानामसि। उप

३ १ २ ३ २
नो हरिभिः सुतम्॥१७९२

३ २उ ३ १ २ ३ १ २र ३ १ २
ओ३म् रेवां इद्रेवत स्तोता स्यात्त्वावतो मघोनः ।

१ २ ३ १ २
प्रेदु हरिवः सुतस्य॥१८०४

१ २ ३ २ ३ १ २र ३ १ २
ओ३म् मा न इन्द्र पीयत्नवे मा शर्धते परा दाः ।

१ २ ३ १ २
शिक्षा शचीवः शचीभिः॥१८०६

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् शिक्षेयमस्मै दित्सेयꣳ शचीपते मनीषिणे ।

२ ३ १ २र ३ २
यदहं गोपतिः स्याम्॥१८३५

३ १ २ ३ २ ३ १ २ ३ २
ओ३म् धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।

१ २र ३ १ २
गामश्वं पिप्युषी दुहे॥१८३६

## देवता- इन्द्राग्नी

१ २ ३ १ २ ३ २ ३ २उ ३
ओ३म् इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो

१ २ ३ १ २ ३ २ ३ २
वरेण्यम्। अस्य पातं धियेषिता॥६६९

१ २ ३ १ २र ३ १ २ ३
ओ३म् इन्द्राग्नी जरितुः सचा यज्ञो जिगाति

१ २ ३ १ २ ३ २ ३ २
चेतनः। अया पातमिमꣳ सुतम्॥६७०

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।

१ २र ३ १ २
ता सोमस्येह तृम्पताम्॥६७१

१ २ ३ १ २र ३ १ २ ३ १ २र
ओ३म् इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे ।

३ १ २र ३ १ २
धिया धेना अवस्यवः॥८००

१ २र ३ १ २ ३ १ २र ३ १ २
ओ३म् ता हि शश्वन्त ईडत इत्था विप्रास ऊतये।

३ २ ३ १ २
सबाधो वाजसातये॥८०१

१ २ ३ १ २ ३ २ ३ १ २
ओ३म् ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे ।

३ १ २ ३ १ २
मेधसाता सनिष्यवः॥८०२

१ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २
ओ३म् ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम्।

३ १ २र
इन्द्राग्नी न मर्धतः॥८५३

३ १ २ ३ २ ३ १ २ ३ १ २ १
ओ३म् उग्रा विघनिना मृध इन्द्राग्नी हवामहे । ता

२ ३ १ २
नो मृडात ईदृशे॥८५४

३ २ ३ १ २र ३ १ २र
ओ३म् हथो वृत्राण्यार्या हथो दासानि सत्पती ।

३ २उ ३ २ ३ १ २
हथो विश्वा अप द्विषः॥८५५

३ १ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः ।

३ २ ३ १ २
अभ्राद्वृष्टिरिवाजनि॥९१६

३ १ २ ३२उ ३ १ २ ३ १ २ ३ २
ओ३म् शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।

२ १ २ ३ १ २
ईशाना पिप्यतं धियः॥९१७

१ २ ३ १ २ ३ १ २ ३ १ २र
ओ३म् मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये ।

१ २ ३ २
मा नो रीरधतं निदे॥९१८

१ २ ३ २ ३ २ १ २र
ओ३म् इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत ।

१ २ ३ २
पिबतꣳ शम्भुवा सुतम्॥९९१

२ ३ १ २ ३ १ २ ३ १ २ ३ १ ३
ओ३म् या वाꣳ सन्ति पुरुस्पृहो नियुतो दाशुषे

१ २ ३ २ ३ १ २
नरा। इन्द्राग्नी ताभिरा गतम्॥९९२

२ ३ १ २   ३ २ ३ १   २र   ३ २
ओ३म् ताभिरा गच्छतं नरोपेदꣳ सवनꣳ सुतम् ।

१ २ ३   १ २
इन्द्राग्नी सोमपीतये॥९९३

३ २ ३   २उ   ३ २ ३   २ ३   १ २ ३
ओ३म् यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु

१ २   १ २ ३   १ २
कर्मसु। इन्द्राग्नी तस्य बोधतम्॥१०७३

३ १ २   ३ १ २   ३ १   २र
ओ३म् तोशासा रथयावाना वृत्रहणापराजिता ।

१ २ ३   १ २
इन्द्राग्नी तस्य बोधतम्॥१०७४

३ १   २   ३ १   २र ३ १ २ ३ १ २
ओ३म् इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः ।

१ २ ३   १ २
इन्द्राग्नी तस्य बोधतम्॥१०७५

१   २   ३   १ २   ३ १ २   ३ १ २
ओ३म् प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।

१ २ ३   २ ३   १ २
इन्द्राग्नी इष आ वृणे॥१५७५

१   २   ३ १   २र   ३ १ २
ओ३म् इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।

३ १ ३र ३ १ २
साकमेकेन कर्मणा॥१५७६

१ २ ३ १ २ ३ ३र ३ १ २ ३ १ २
ओ३म् इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः ।

३ १ २ ३ २ १ २
ऋतस्य पथ्या३ अनु॥१५७७

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इन्द्राग्नी तविषाणि वाꣳ सधस्थानि प्रयाꣳसि

३ २ ३ १ २ ३ २
च। युवोरप्तूर्यꣳ हितम्॥१५७८

१ २ ३ २ ३ २उ ३ १ २
ओ३म् इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।

१ २ ३ २ ३क २र
तद्वां चेति प्र वीर्यम्॥१६९३

३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् तोशा वृत्रहणा हुवे सजित्वानापराजिता ।

३ १ २ ३ १ २
इन्द्राग्नी वाजसातमा॥१७०२

## देवता-उषाः

२ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३
ओ३म् प्रति ष्या सूनरी जनी व्युच्छन्ती परि

१ २ ३ १ २ ३ २
स्वसुः। दिवो अदर्शि दुहिता॥१७२५

१ २ ३ १ २ ३ १ २र ३ १ २ १ २
ओ३म् अश्वेव चित्रारुषी माता गवामृतावरी। सखा
३ १ २ ३ १
भूदश्विनोरुषाः॥१७२६

३ १ २र ३ १ २ ३ २ ३ १ २र
ओ३म् उत सखास्यश्विनोरुत माता गवामसि ।
३ २ ३ १ २
उतोषो वस्व ईशिषे॥१७२७

देवता-तनूनपातः

१ २ ३ २ ३ १ २ ३ १
ओ३म् मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे । अद्या
२ ३ १ २
कृणुह्यूतये॥१३४८

देवता-देवा वा

१ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
३ २उ ३ १ २
पृथिव्या अधि सानवि॥१६७४

## देवता- द्यावापृथिवी

२ ३ २ ३ १ २ ३ १ २
ओ३म् प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे ।

२ ३ २ ३ १ २
शुची उप प्रशस्तये॥१५९६

३ २ ३क २र ३ २उ ३ १ २
ओ३म् पुनाने तन्वा मिथ स्वेन दक्षेण राजथः ।

३ १ २ ३ २ ३ २
ऊह्याथे सनादृतम्॥१५९७

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम्।

१ २ ३ १ २र
परि यज्ञं नि षेदथुः॥१५९८

## देवता- नराशंसः

२ ३ १ २ ३ २ ३ २ ३ २ ३ १ २र
ओ३म् नराशꣳसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।

१ २ ३ १ २
मधुजिह्वꣳ हविष्कृतम्॥१३४९

## देवता- पवमानः सोमः

३ १ २ ३ १ २र ३ १ २र
ओ३म् उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।

३ २उ ३ २ ३ १ २
उग्र शर्म महि श्रवः॥४६७

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।

१ २ ३ १ २ ३ २
इन्द्राय पातवे सुतः॥४६८

१ २ ३ १ २ ३ १ २ ३ १
ओ३म् वृषा पवस्व धारया मरुत्वते च मत्सरः ।

२ ३ १ २ ३ १ २
विश्वा दधान ओजसा॥४६९

२ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।

३ १ २ ३ २
देवावीरघशꣳसहा॥४७०

३ २उ ३ १ २ ३ १ २ ३ १ २
ओ३म् तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।

१ २ ३ १ २
हरिरेति कनिक्रदत्॥४७१

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।

३ २ ३ १ २ ३ १ २

अर्कस्य योनिमासदम्॥४७२

१ २ ३ १ २र ३ १ २र ३ २ ३ २उ

ओ३म् असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः। श्येनो

३ १ २

न योनिमासदत्॥४७३

१ २ ३ १ २ ३ १ २ ३ १ २

ओ३म् पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।

३ १ २ ३ २ ३ १ २

मरुद्भ्यो वायवे मदः॥४७४

१ २ ३ १ २ ३ २ ३ २ ३ १ २

ओ३म् परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत्।

१ २ ३ १ २

मदेषु सर्वधा असि॥४७५

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २

ओ३म् परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः ।

३ १ २ ३ १ २

स्वानैर्याति कविक्रतुः॥४७६

१ २र ३ २ ३ १ २ ३ १ २

ओ३म् प्र सोमासो मदच्युतः श्रवसे नो मघोनः ।

३ २ ३ १ २

सुता विदथे अक्रमुः॥४७७

१ २र ३ २ ३ १ २ ३ १ २
ओ३म् प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।

१ २ ३ १ २
वनानि महिषा इव॥४७८

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
ओ३म् पवस्वेन्दो वृषा सुतः कृधी नो यशसो

१ २ २ ३ २ ३ १ २
जने। विश्वा अप द्विषो जहि॥४७९

२ ३ १ २ ३ १ २ ३ १ २
ओ३म् वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।

१ २ ३ १ २
पवमान स्वर्दृशम्॥४८०

१ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः ।

३ १ २र ३ १ २
सृजदश्वꣳ रथीरिव॥४८१

१ २ ३ २ ३ १ २ ३ १ २र
ओ३म् असृक्षत प्र वाजिनो गव्या सोमासो

३ २ ३ १ २ ३ १ २र
अश्वया। शुक्रासो वीरयाशवः॥४८२

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।

३ १ २र ३ १ २
वायुमा रोह धर्मणा॥४८३

१ २ ३ २ ३ १ २र ३ २
ओ३म् पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।

१ २ ३ २ ३ २
ज्योतिर्वैश्वानरं बृहत्॥४८४

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् परि स्वानास इन्दवो मदाय बर्हणा गिरा ।

१ २ ३ १ २
मधो अर्षन्ति धारया॥४८५

२ ३ १ २ ३ १ २र ३ १ २र ३ २
ओ३म् परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।

३ १ २र ३ १ २
कारुं बिभ्रत्पुरुस्पृहम्॥४८६

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
ओ३म् उपो षु जातमप्तुरं गोभिर्भङ्गं परि ष्कृतम्।

१ २ ३ १ २
इन्दुं देवा अयासिषुः॥४८७

३ १ २ ३ २उ ३ २ ३ १ २
ओ३म् पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।

३ २ ३ १ २ ३ १ २
शुम्भन्ति विप्रं धीतिभिः॥४८८

३ २ ३ १ २ ३ २उ ३ १ २ ३ १
ओ३म् आविशन्कलशꣳ सुतो विश्वा अर्षन्नभि

२र २ ३ १ २
श्रियः। इन्दुरिन्द्राय धीयते॥४८९

१ २ ३ २ ३ १ २ ३ १२ ३क २र ३ २
ओ३म् असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।

१ २ ३ १ २
कार्ष्मन्वाजी न्यक्रमीत्॥४९०

२उ ३ १ २र ३ २ ३ २ ३ १ २
ओ३म् प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः।

१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम्॥४९१

३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।

३ १ २र ३ १ २
नुदस्वादेवयुं जनम्॥४९२

३ १ २ ३ १२ ३ २ ३ २ ३ १ २
ओ३म् अया पवस्व धारया यया सूर्यमरोचयः ।

३ १ २र ३ २
हिन्वानो मानुषीरपः॥४९३

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
ओ३म् स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।

३ १ २ ३ २३२
वव्रिवाꣳसं महीरपः॥४९४

३ २ ३ १ २र ३ १ २ ३ २३ २
ओ३म् अया वीती परि स्रव यस्त इन्दो मदेष्वा ।

३ १२ ३ १ २र
अवाहन्नवतीर्नव॥४९५

१ २ ३ १ २र ३ २उ ३ १ २ ३ १ ३
ओ३म् परि द्युक्षꣳ सनद्रायिं भरद्वाजं नो अन्धसा।

३ १ २ ३ २३ २
स्वानो अर्ष पवित्र आ॥४९६

१ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २
ओ३म् अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।

१ २र
सꣳ सूर्येण दिद्युते॥४९७

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।

२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम्॥४९८

१ २ ३ १ २ ३ १ २र ३ २ ३ १
ओ३म् अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ

२ ३ १ २ ३ १ २
नय। पुनीहीन्द्राय पातवे॥४९९

२ ३ २ ३ १ २ ३ १ २ ३ १ ३र
ओ३म् तरत्स मन्दी धावति धारा सुतस्यान्धसः ।

२ ३ २ ३ १ २
तरत्स मन्दी धावति॥५००

१ २ ३ १ २ ३ १ २
ओ३म् आ पवस्व सहस्रिणꣳ रयिꣳ सोम

३ १ २ ३ १ ३र
सुवीर्यम्। अस्मे श्रवाꣳसि धारय॥५०१

१ २ ३ १ २ ३ १ २ ३ १ ३र
ओ३म् अनु प्रत्नास आयवः पदं नवीयो अक्रमुः ।

३ १ २ ३ १ २
रुचे जनन्त सूर्यम्॥५०२

१ २ ३ १ २ ३ १ ३र ३ १ २
ओ३म् अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।

२ ३ २ ३ २ ३ २
सीदन्योनौ वनेष्वा॥५०३

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः ।

१ ३ १ २
वृषा धर्माणि दध्रिषे॥५०४

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इषे पवस्व धारया मृज्यमानो मनीषिभिः ।

१ २ ३ १ २र
इन्दो रुचाभि गा इहि॥५०५

३ १ २ ३ १२ ३ १ २ ३ २
ओ३म् मन्द्रया सोम धारया वृषा पवस्व देवयुः ।

२ ३ १२ ३ २
अव्यो वारेभिरस्मयुः॥५०६

३ १ २ ३ १ २ ३ २उ ३क २र
ओ३म् अया सोम सु कृत्यया महान्त्सन्नभ्यवर्धथाः।

३ १ २र
हिन्दान इद्वृषायसे॥५०७

३ १ २र ३ १ २र ३ १ २
ओ३म् अयं विचर्षणिर्हितः पवमानः स चेतति ।

३ १ २र ३ २
हिन्वान आप्यं बृहत्॥५०८

१ २ ३ १ २र ३ १ २र
ओ३म् प्र न इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि।

३ २ ३ २ ३ १ २
अभि देवा२ अयास्यः॥५०९

३ १ २ ३ २उ ३ २ ३ १ २
ओ३म् अपघ्नन्पवते मृधोऽप सोमो अराव्णः ।

२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम्॥५१०

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।

३ १ २र
वरिवोवित्परिस्रव॥५९२

३ १ २र ३ २उ ३ २ ३ १ २
ओ३म् एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।

१ २
सिषासन्तो वनामहे॥५९३

१ २ ३ १ २ ३ १ २ ३ २
ओ३म् उपास्मै गायता नरः पवमानायेन्दवे । अभि

३ १ २र
देवाँ इयक्षते॥६५१

३ २ ३ १ २ ३ १ २र
ओ३म् अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः ।

३ २ ३ १ २ ३ २
देवं देवाय देवयु॥६५२

१ २ ३ २उ ३ १ २र ३ १ २र
ओ३म् स नः पवस्व शं गवे शं जनाय शमर्वते ।

१ २ ३ १ २
शँ राजन्नोषधीभ्यः॥६५३

१ २ ३ १ २ ३ १ २ ३ २
ओ३म् दविद्युतत्या रुचा परिष्टोभन्त्या कृपा।

१ २ ३ १ २र
सोमाः शुक्रा गवाशिरः॥६५४

३ २ ३ १ २ ३ १ २र ३क २र
ओ३म् हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्।

१ २ ३ १ २
सीदन्तो वनुषो यथा॥६५५

३ १ २ ३ १ २ ३ २ ३ १ २
ओ३म् ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे ।

१ २ ३ १ २ ३ २
पवस्व सूर्यो दृशे॥६५६

१ २ ३ २ ३ १ २
ओ३म् पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत ।

१ २ ३ १ २ ३ १ २
अर्वन्तो न श्रवस्यवः॥६५७

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये ।

१ २ ३ १ २
अवावशन्त धीतयः॥६५८

१ २ ३ २उ ३ २ ३ २ ३ २ ३ १ २
ओ३म् अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः ।

१ २ ३ २ ३ २ ३ २
अग्मन्नृतस्य योनिमा॥६५९

३ २ ३ १ २ ३ २उ ३ १ २ १ २
ओ३म् रक्षोहा विश्वचर्षणिरभि योनिमयोहते। द्रोणे

३ २ ३ १ २
सधस्थमासदत्॥६९०

३ १ २ ३ १ २ ३ १ २
ओ३म् वरिवोधातमो भुवो मꣳहिष्ठो वृत्रहन्तमः ।

२ ३ १ २ ३ १ २
पर्षि राधो मघोनाम्॥६९१

१ २र ३ १ २ ३ १ २ ३ २
ओ३म् यो धारया पावकया परिप्रस्यन्दते सुतः ।

२ ३ २ ३ १ २र
इन्दुरश्वो न कृत्व्यः॥६९८

२ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २
ओ३म् तं दुरोषमभी नरः सोमं विश्वाच्या धिया ।

३ १ २ ३ १ २
यज्ञाय सन्त्वद्रयः॥६९९

३ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
ओ३म् अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः ।

१ २ ३ १ २र
पय सहस्रसामृषिम्॥७५५

३ १ २र ३ २ ३ १ २र
ओ३म् अयꣳ सूर्य इवोपदृगयꣳ सराꣳसि धावति ।

३ २ ३ २ ३ १ २र
सप्त प्रवत आ दिवम्॥७५६

३ १ २र ३ १ २र ३ १ २
ओ३म् अयं विश्वानि तिष्ठति पुनानो भुवनोपरि ।

१ २ ३ १ २र
सोमो देवो न सूर्यः॥७५७

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ १ २
ओ३म् एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः। हरि

३ १ २
पवित्रे अर्षति॥७५८

३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् एष प्रत्नेन मन्मना देवो देवेभ्यस्परि ।

३ १ २र
कविर्विप्रेण वावृधे॥७५९

३ २ ३ १ २र ३ २ ३ १ २
ओ३म् दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे ।

१ २ ३ १ २
क्रन्दं देवाँ अजीजनः॥७६०

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे ।

१ २ ३ २ ३ २
पवमान विदा रयिम्॥७६१

ओ३म् उपास्मै गायता नरः पवमानायेन्दवे । अभि

देवाँ इयक्षते॥७६३

ओ३म् अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य

धारया। वाजं गोमन्तमक्षरन्॥७६५

ओ३म् सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।

सोमा अर्षन्तु विष्णवे॥७६६

ओ३म् आदीँ हँसो यथा गणं

विश्वस्यावीवशन्मतिम्। अत्यो न

गोभिरज्यते॥७७०

ओ३म् आदीं त्रितस्य योषणो हरिँ हिन्वन्त्यद्रिभिः।

इन्दुमिन्द्राय पीतये॥७७१

१ २ ३ १ २ ३ १ २र
ओ३म् पवस्व वाचो अग्रियः सोम

३ १ २ ३ १ २ ३ १ २र ३
चित्राभिरूतिभिः। अभि विश्वानि

१ २
काव्या॥७७५

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
ओ३म् त्वꣳ समुद्रिया अपोऽग्रियो वाच ईरयन् ।

१ २
पवस्व विश्वचर्षणे॥७७६

२ ३ १ २र ३ १ २
ओ३म् तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।

१ २ ३ १ २
तुभ्यं धावन्ति धेनवः॥७७७

१ २ ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् यस्य ते सख्ये वयꣳ सासह्याम पृतन्यतः ।

१ २ ३ १ २ ३ २
तवेन्दो द्युम्न उत्तमे॥७७९

१ २ ३ १ २र ३ २ ३ २ ३ १ २
ओ३म् या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे।

१ २ ३ २
रक्षा समस्य नो निदः॥७८०

१ २ ३ २ ३ २ ३ २ ३ २३ १ २ ३ २
ओ३म् वृष्णस्ते वृष्ण्यꣳ शवो वृषा वनं वृषा सुतः।

१ २र ३ १ २र
स त्वं वृषन्वृषेदसि॥७८२

२ ३ १ २ ३ २ ३ १ २र ३
ओ३म् अश्वो न चक्रदो वृषा सं गा इन्दो

१ २र १ २ ३ १ २र
समर्वतः। वि नो राये दुरो वृधि॥७८३

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः ।

१ २ ३ १ २
द्रोणे सधस्थमश्नुषे॥७८५

१ २ ३ २ ३ १ २ ३ १
ओ३म् आ पवस्व सुवीर्यं मन्दमानः स्वायुध । इहो

२ ३ १ २
ष्विन्दवा गहि॥७८६

१ २ ३ २ ३ १ २ ३ २
ओ३म् पवमानस्य ते वयं पवित्रमभ्युन्दतः ।

३ १ २र
सखित्वमा वृणीमहे॥७८७

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया ।

१ २
तेभिर्नः सोम मृडय॥७८८

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् स नः पुनान आ भर रयिं वीरवतीमिषम्

१ २ ३ १ २
ईशानः सोम विश्वतः॥७८९

१ २ ३ १२ ३ २ १ २ ३ १ २
ओ३म् तं त्वा धर्त्तारमोण्यो३ः पवमान स्वर्दृशम् ।

३ १ २र ३ १ २
हिन्वे वाजेषु वाजिनम्॥८०४

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
ओ३म् अया चित्तो विपानया हरिः पवस्व धारया ।

२ ३ १ २
युजं वाजेषु चोदय॥८०५

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् जघ्निर्वृत्रममित्रियꣳ सस्निर्वाजं दिवेदिवे ।

१ २ ३ १ २
गोषातिरश्वसा असि॥८१६

१ २ ३ १ २ ३ १ ३ २ ३ १ २
ओ३म् सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभि ।

१ २ ३ २उ ३ २
सीदं च्छ्येनो न योनिमा॥८१७

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।

१ २ ३ १ २
अधा चिदिन्द्र नः सचा॥८२५

२उ ३ १ २ ३ १ २र
ओ३म् मो षु ब्रह्मेव तदिन्द्रयुर्भुवो वाजानां पते ।

१ २ ३ २ ३ १ २
मत्स्वा सुतस्य गोमतः॥८२६

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् एत असृग्रमिन्दवस्तिरः पवित्रमाशवः ।

१ २ ३ १ २र
विश्वान्यभि सौभगा॥८३०

३ १ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् विघ्नन्तो दुरिता पुरु सुगा तोकाय

३ १ २ १ २ ३ २ ३ १ २
वाजिनः। त्मना कृण्वन्तो अर्वतः॥८३१

३ २ ३ १ २ ३ २३क २र ३ २
ओ३म् कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् ।

१ २ ३ १ २ ३ १ २
इडामस्मभ्यꣳ संयतम्॥८३२

१ २ ३ १ २ ३ १ २ ३ १ २र
ओ३म् राजा मेधाभिरीयते पवमानो मनावधि ।

३ १ २ ३ १ २
अन्तरिक्षेण यातवे॥८३३

१ २ ३ २ ३ १ २ ३ १ २र
ओ३म् आ नः सोम सहो जुवो रूपं न वर्चसे

३ २ ३ १ २
भर। सुष्वाणो देववीतये॥८३४

१ २ ३ २ ३ २ ३ २ ३
ओ३म् आ न इन्दो शातग्विनं गवां पोषꣳ

१ २ २ ३ १ २ ३ १ २
स्वश्व्यम्। वहा भगत्तिमूतये॥८३५

१ २ ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् तं त्वा नृम्णानि बिभ्रतꣳ सधस्थेषु महो

३ २ १ २ ३ १ २
दिवः। चारुꣳ सुकृत्ययेमहे॥८३६

१ २ ३क २र ३ १ २ ३ १ २ ३ १
ओ३म् संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम्। शतं

२र ३ १ २
पुरो रुरुक्षणिम्॥८३७

१ २ ३ २३क २र ३ १ २ ३ २
ओ३म् अतस्त्वा रयिरभ्ययद्राजानꣳ सुक्रतो दिवः।

३ १ २ ३ १ २
सुपर्णो अव्यथी भरत्॥८३८

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे।

३ १ २र
अभिष्टिकृद्विचर्षणिः॥८३९

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् विश्वस्मा इत्स्वर्दृशे साधारणꣳ रजस्तुरम् ।

३ २ ३ २ ३ १ २
गोपामृतस्य विर्भरत्॥८४०

३ १ २र ३ २ ३ १ २ १ २
ओ३म् पुनानो वरिव स्कृध्यूर्ज जनाय गिर्वणः। हरे

३ २ ३ १ २
सृजान आशिरम्॥८४२

३ २ ३ १ २ ३ १ २ ३ २
ओ३म् पुनानो देववीतय इन्द्रस्य याहि नि ष्कृतम्।

३ २ ३ १ २ ३ २
द्युतानो वाजिभिर्हितः॥८४३

३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः ।

३ १ २ ३ १ २र
मर्जयन्तीर्दिवः शिशुम्॥८७०

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् रायः समुद्राꣳश्चतुरोऽस्मभ्यꣳ सोम विश्वतः।

१ २ ३ १ २
आ पवस्व सहस्रिणः॥८७१

१ २ ३ २ ३ २ ३ १ २ ३ २ २उ
ओ३म् पवमान रसस्तव मदो राजन्नदुच्छुन । वि

३ १ २
वारमव्यमर्षति॥८९०

१ २ ३ २ ३ २ ३ १ २
ओ३म् पवमानस्य ते रसो दक्षो वि राजति

३ २ २ ३ २ ३क २र ३ २
द्युमान्। ज्योतिर्विश्वꣳ स्वर्दृशे॥८९१

३ १ २ ३ २ ३ १ २ ३क २र
ओ३म् सुवितस्य मनामहेऽति सेतुं दुराय्यम् ।

३ २ ३ १ २ ३
साह्याम दस्युमव्रतम्॥८९३

३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।

१ २ ३ १ २ ३ २
चरन्ति विद्युतो दिवि॥८९४

१ २ ३ २उ ३ १ २ ३ १ २
ओ३म् आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।

१ २ ३ १ २
अश्ववत्सोम वीरवत्॥८९५

१ २ ३ २ ३ १ २र
ओ३म् पवस्व विश्वचर्षण आ मही रोदसी पृण ।

३ २उ ३ २ ३ १ २
उषाः सूर्यो न रश्मिभिः॥८९६

१ २ ३ २ ३ १ २ ३ १ २
ओ३म् परि णः शर्मयन्त्या धारया सोम विश्वतः ।

१ २ ३ १ २ ३ १ २
सरा रसेव विष्टपम्॥८९७

३ १ २ ३ १ २ ३ २ ३ १ २ १ २
ओ३म् आशुरर्ष बृहन्मते परि प्रियेण धाम्ना । यत्र

३ २उ ३ १ २
देवा इति ब्रुवन्॥८९८

३ १ २र ३ १ २ ३ २ ३ १ २
ओ३म् परि ष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।

३ २ ३ १ २र
वृष्टिं दिवः परि स्रव॥८९९

३ २उ ३ १ २र ३ १ ३ २ ३
ओ३म् अयꣳ स यो दिवस्परि रघुयामा पवित्र

२ १ २ ३ १ २र
आ। सिन्धोरूर्मा व्यक्षरत्॥९००

३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
ओ३म् सुत एति पवित्र आ त्विषिं दधान ओजसा।

३ १ २ ३ १ २
विचक्षणो विरोचयन्॥९०१

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् आविवासन्परावतो अथो अर्वावतः सुतः ।

१ २ ३ १ २
इन्द्राय सिच्यते मधु॥९०२

३ १ २ ३ १ २ ३ १ २
ओ३म् समीचीना अनूषत हरिꣳ हिन्वन्त्यद्रिभिः ।

२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये॥९०३

३ २ ३ २ ३ १ २ ३ १ ३ २ ३ १ २
ओ३म् हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम्।

३ १ २र ३ १ २
महामिन्दुं महीयुवः॥९०४

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् पवमान रुचारुचा देवो देवेभ्यः सुतः ।

२ ३ २ ३ १ २
विश्वा वसून्या विश॥९०५

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १
ओ३म् आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः। इषे

२ ३ १ २
पवस्व संयतम्॥९०६

२ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ २
ओ३म् सं देवैः शोभते वृषा कविर्योनावधि प्रियः ।

१ २ ३ १ २
पवमानो अदाभ्यः॥९२०

१ २ ३ २ ३ १ २उ ३
ओ३म् पवमान धिया हितो३ऽभि योनिं

१ २ १ २ ३ २ २र
कनिक्रदत्। धर्मणा वायुमारुहः॥९२१

१ २र ३ १ २ ३ २ ३ २ ३ १ २ ३ २
ओ३म् आ योनिमरुणो रुहद्गमदिन्द्रं वृषा सुतम् ।

३ १ २र
ध्रुवे सदसि सीदतु॥९२५

१ २ ३ २ ३ १ २ ३ १ २
ओ३म् नू नो रयिं महामिन्दोऽस्मभ्यं सोम

३ १ २ १ २ ३ १ २
विश्वतः। आ पवस्व सहस्रिणम्॥९२६

२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् स सूनुर्मातरा शुचिर्जातो जाते अरोचयत्।

३ २ ३ १ २ ३ १ २
महान्मही ऋतावृधा॥९३६

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।

३क २र ३   १ २
वीत्यर्ष पनिष्टये॥९३७

१ २   ३ २ ३ १ २
ओ३म् पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत ।

१ २   ३ २ ३ १ २
सूर्यस्येव न रश्मयः॥९५८

३ २   ३ २   ३ २उ   ३   १ २   ३ १ २
ओ३म् केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि ।

३ १ २
समुद्रः सोम पिन्वसे॥९५९

३   १   २र   ३   १ २   ३   १ २
ओ३म् जज्ञानो वाचमिष्यसि पवमान विधर्मणि ।

१   ३ १   २र
क्रन्दं देवो न सूर्यः॥९६०

१   २र   ३   १ २   ३   १ २
ओ३म् प्र सोमासो अधन्विषुः पवमानास इन्दवः ।

३   २   ३   १ २
श्रीणाना अप्सु वृञ्जते॥९६१

३ १   २र   ३ २ ३   २   ३ १ २   ३ २
ओ३म् अभि गावो अधन्विषुरापो न प्रवता यतीः ।

३   १   २र
पुनाना इन्द्रमाशत॥९६२

१ २ ३ १ २र ३ १ २
ओ३म् प्र पवमान धन्वसि सोमेन्द्राय मादनः ।

१ २ ३ १ २र
नृभिर्यतो वि नीयसे॥९६३

२ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे ।

२ ३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने॥९६४

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् त्वꣳ सोम नृमादनः पवस्व चर्षणीधृतिः ।

२ ३ १ २ ३ १ २
सस्निर्यो अनुमाद्यः॥९६५

१ २ ३ १ २ ३ १ २ ३ १ २ १ २
ओ३म् पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः । शुचिः

३ १ २र
पावको अद्भुतः॥९६६

१ २ ३ १ २ ३ १ २ ३ १
ओ३म् शुचिः पावक उच्यते सोमः सुतः स

२र ३ १ २ ३ २
मधुमान्। देवावीरघशꣳसहा॥९६७

२ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् प्र कविर्देववीतयेऽव्या वारेभिरव्यत ।

३ १ २र ३ १ २र
साह्वान्विश्वा अभि स्पृधः॥९६८

१ २र ३ २ ३ २उ ३
ओ३म् स हि ष्मा जरितृभ्य आ वाजं

१ २ ३ १ २ १ २ ३ १ २
गोमन्तमिन्वति। पवमानः सहस्रिणम्॥९६९

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
ओ३म् परि विश्वानि चेतसा मृज्यसे पवसे मती ।

१ २ ३ १ २
स नः सोम श्रवो विदः॥९७०

३क २र ३ १ २र ३ १ २ ३ २ ३ २
ओ३म् अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवꣳ रयिम् ।

१ २ ३ २ ३ १ २
इषꣳ स्तोतृभ्य आ भर॥९७१

१ २र ३ १ २र ३ १ २
ओ३म् त्वꣳ राजेव सुव्रतो गिरः सोमाविवेशिथ ।

३ १ २
पुनानो वह्ने अद्भुत॥९७२

१ २र ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।

१ २ ३ १ २
सोमश्चमूषु सीदति॥९७३

३ १ २ १ २र ३ २ ३ १ २
ओ३म् क्रीडुर्मखो न मꣳहयुः पवित्रꣳ सोम

१ २ ३ २ ३ १ २
गच्छसि। दधत्स्तोत्रे सुवीर्यम्॥९७४

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव ।

१ २ ३ १ २
विश्वा च सोम सौभगा॥९७५

२ ३ २ ३ २ ३ २ ३ १ २
ओ३म् इन्दो यथा तव स्तवो यथा ते

३ १ २र २ ३ १ २ ३ १ २
जातमन्धसः। नि बर्हिषि प्रिये सदः॥९७६

३ १ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् उत नो गोविदश्ववित्पवस्व सोमान्धसा ।

३ १ २ ३ १ २
मक्षूतमेभिरहभिः॥९७७

२ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् यो जिनाति न जीयते हन्ति शत्रुमभीत्य ।

१ २
स पवस्व सहस्रजित्॥९७८

२ ३ १ २ ३ १ २र ३ १ २
ओ३म् यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये ।

१ २ ३ २ ३ १ २
ताभिः पवित्रमासदः॥९७९

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया ।

१ २ ३ २ ३ २ ३ २
सीदन्नृतस्य योनिमा॥९८०

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् त्वꣳ सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः ।

३ २ ३ १ २र
वरिवोविद्घृतं पयः॥९८१

३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।

१ २ ३ १ २
सोमा अर्षन्तु विष्णवे॥९९५

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इषं तोकाय नो दधदस्मभ्यꣳ सोम

३ १ २ १ २ ३ १ २
विश्वतः। आ पवस्व सहस्रिणम्॥९९६

१ २ ३ २ ३क २र ३ १ २र ३ १ २
ओ३म् यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु ।

१ २ ३ १ २र
तन्नः पुनान आ भर॥९९९

१ २ ३ १ ३र ३ २ ३ १ २ ३ १ २
ओ३म् वृषा पुनान आयुꣳषि स्तनयन्नधि बर्हिषि ।

२ ३ २३ ३ १ २
हरिः सन्योनिमासदः॥१०००

३ १ ३र ३ १ २ ३ १ २
ओ३म् युवꣳ हि स्थः स्वःपती इन्द्रश्च सोम गोपती।

३ १ २ ३ १ २
ईशाना पिप्यतं धियः॥१००१

३ १ ३र ३ १ २ ३ २ ३ १ ३र ३ २
ओ३म् शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् ।

१ २ ३ २ ३ १ २
स्वदन्ति गावः पयोभिः॥१००९

२ ३ २ ३ १ ३र ३ १ २ ३ १ २ २ ३
ओ३म् आदीमश्वं न हेतारमशूशुभन्नमृताय । मधो

१ २ ३ १ २
रसꣳ सधमादे॥१०१०

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् शुम्भमानो ऋतायुभिर्मृज्यमाना गभस्त्योः ।

१ २ ३ १ २ ३ १ २
पवन्ते वारे अव्यये॥१०३५

१ ३र ३ २ ३ २ ३ १ २ ३ २ ३
ओ३म् ते विश्वा दाशुषे वसु सोमा दिव्यानि

१ २ १ २ ३ १ ३र
पार्थिवा। पवन्तामान्तरिक्ष्या॥१०३६

१ २ ३ १ ३र ३ १ २ ३ १ २
ओ३म् पवस्व देववीरति पवित्रꣳ सोम रꣳह्या ।

१ २ ३ १ ३र
इन्द्रमिन्दो वृषा विश॥१०३७

१ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।

१ ३र ३ १ २
आ योनिं धर्णसिः सदः॥१०३८

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
ओ३म् अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।

३ १ २ ३ १ २
अपो वसिष्ट सुक्रतुः॥१०३९

३ १ २ ३ १ ३र ३ १ २
ओ३म् महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।

१ ३र ३ १ २
यद्गोभिर्वासयिष्यसे॥१०४०

३ २ ३ १ २ ३ २ ३ १ २
ओ३म् समुद्रो अप्सु मामृजे विष्टम्भो धरुणो

३ २ १ २ ३ १ २ ३ २
दिवः। सोमः पवित्रे अस्मयुः॥१०४१

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः।

२ ३ १ २ ३ १ २
याभिर्मदाय शुम्भसे॥१०४३

२ ३ १ २ ३ १ २ ३ १ २
ओ३म् तं त्वा मदाय घृष्वय उ लोक कृत्नुमीमहे।

२ ३ १ २ ३ २
तव प्रशस्तये महे॥१०४४

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् गोषा इन्दो नृषा अस्यश्वसा वाजसा उत।

३ २ ३ १ २ ३ २
आत्मा यज्ञस्य पूर्व्यः॥१०४५

३ १ २ ३ १ २र ३ १२
ओ३म् अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया।

३ १ २ ३ १ २
पर्जन्यो वृष्टिमाँ इव॥१०४६

१ २ ३ १ २ ३ १ २ ३ २ ३
ओ३म् सना च सोम जेषि च पवमान महि

१ २ १ २ ३ १ २
श्रवः। अथा नो वस्यसस्कृधि॥१०४७

२ ३ २ ३ २ ३ २ ऽ १ २ ३
ओ३म् सना ज्योतिः सना स्वा३र्विश्वा च सोम

१ २   १ २   ३ १ २
सौभगा। अथा नो स्यसस्कृधि॥१०४८

२ ३   १ २ ३ २उ   ३ १ २   ३   १ २
ओ३म् सना दक्षमुत क्रतुमप सोम मृधो जहि ।

१ २   ३   १ २
अथा नो वस्यसस्कृधि॥१०४९

१ २   ३ २ ३   २ ३ १ २ ३   १ २
ओ३म् पवीतारः पुनीतन सोममिन्द्राय पातवे ।

१ २   ३   १ २
अथा नो वस्यसस्कृधि॥१०५०

१   २र   ३   १   २ ३   २ ३   २ ३
ओ३म् त्वꣳ सूर्ये न आ भज तव क्रत्वा

२ ३ १ २   १ २   ३   १ २
तवोतिभिः। अथा नो वस्यसस्कृधि॥१०५१

२ ३   २ ३   २ ३ २ ३   १   २   ३   १ २
ओ३म् तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम् ।

१ २   ३   १ २
अथा नो वस्यसस्कृधि॥१०५२

३क २र   ३   १ २   ३ १ २   ३ २
ओ३म् अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम् ।

१ २   ३   १ २
अथा नो वस्यसस्कृधि॥१०५३

३ २ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् अभ्य३र्षानपच्युतो वाजिन्त्समत्सु सासहिः ।

१ २ ३ १ २
अथा नो वस्यसस्कृधि॥१०५४

२ ३ १ २ ३ १ २ ३ १ २ १ २
ओ३म् त्वां यज्ञैरवीवृधन्पवमान विधर्मणि । अथा

३ १ २
नो वस्यसस्कृधि॥१०५५

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।

१ २ ३ १ २
अथा नो वस्यसस्कृधि॥१०५६

३ १ २ ३ १ २ ३ १ २ ३ १ २ २ ३ २
ओ३म् उस्रा वेद वसूनां मर्त्तस्य देव्यवसः। तरत्स

३ १ २
मन्दी धावति॥१०५८

३ १ २ ३ २ ३ २ ३ १ २
ओ३म् ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे ।

२ ३ २ ३ १ २
तरत्स मन्दी धावति॥१०५९

१ २र ३ २ ३ १ २ ३ १ २ ३
ओ३म् आ ययोस्त्रिꣳशतं तना सहस्राणि च

१ २ २ ३ २ ३ १ २
दद्महे। तरत्स मन्दी धावति॥१०६०

३ १ २र ३ १ २र ३ २
ओ३म् एते सोमा असृक्षत गृणानाः शवसे महे ।

३ १ २ ३ १ २
मदिन्तमस्य धारया॥१०६१

३ १ २र ३ १ २ ३ १ २ ३ १
ओ३म् अभि गव्यानि वीतये नृम्णा पुनानो

२ ३ १ २ ३ १ २
अर्षसि। सनद्वाजः परि स्रव॥१०६२

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः ।

३ २ ३ १ २
गृणानो जमदग्निना॥१०६३

२ ३ १ २ ३ २ ३ १ २
ओ३म् तं त्वा विप्रा वचोविदः परि ष्कृण्वन्ति

३ २ १ २ ३ १ २
धर्णसिम्। सं त्वा मृजन्त्यायवः॥१०७७

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे ।

१ २ ३ १ २
पवमानस्य मरुतः॥१०७८

३ २ ३ २उ ३ १ २ ३ २ ३ १ २
ओ३म् एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम्।

१ २ ३ १ २
समादित्येभिरख्यत॥१०८१

१ २र ३ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् समिन्द्रेणोत वायुना सुत एति पवित्र आ ।

१ २र ३ १ २
सꣳ सूर्यस्य रश्मिभिः॥१०८२

२ ३ १ २ ३ १ २ ३ १ २ ३
ओ३म् स नो भगाय वायवे पूष्णो पवस्व

१ २ १ २ ३ १ २र
मधुमान्। चारुर्मित्रे वरुणे च॥१०८३

२उ ३ २ ३ २उ ३ २ ३ १ २र १ २
ओ३म् त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः। मदेषु

३ १ २
सर्वधा असि॥१०९४

१ २र ३ १ २ ३ १ २ ३ १ २
ओ३म् त्वे विश्वे सजोषसो देवासः पीतिमाशत ।

१ २ ३ १ २
मदेषु सर्वधा असि॥१०९५

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् प्र स्वानासो रथा इवार्वन्तो न श्रवस्यवः ।

१ २ ३ १ २
सोमासो राये अक्रमुः॥१११९

३ २ ३ १ २ ३ १ २र
ओ३म् हिन्वानासो रथा इव दधन्विरे गभस्त्योः ।

१ २ ३ १ २
भरासः कारिणामिव॥११२०

१ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते।

३ २उ ३ २ ३ १ २
यज्ञो न सप्त धातृभिः॥११२१

३ १ २ ३ १ २ ३ १ २ ३ २ ३
ओ३म् आपानासो विवस्वतो जिन्वन्त उषसो

१ २ २ ३ २ ३ १ २
भगम्। सूरा अण्वं वि तन्वते॥११२३

२ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः ।

२ ३ १२ ३ १ २
वृष्णो हरस आयवः॥११२४

३ १ २ ३ १ २ ३ १ २
ओ३म् समीचीनास आशत होतारः सप्तजानयः ।

३ १ २र ३ १ २
पदमेकस्य पिप्रतः॥११२५

२ ३ १ २ ३ १ २३ १ २ ३ १ २ ३ २
ओ३म् नाभा नाभिं न आ ददे चक्षुषा सूर्य दृशे ।

३ १ २र ३ १ २
कवेरपत्यमा दुहे॥११२६

३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् ।

१ २ ३ १ २
सूरः पस्यति चक्षसा॥११२७

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।

३ १ २ ३ १ २
विदाना अस्य योजना॥११२८

२उ ३ १ २ ३ २ ३ २ ३ १ २र
ओ३म् प्र धारा मधो अग्रियो महीरपो वि गाहते ।

३ २ ३ २ ३ १ २
हविर्हविःषु वन्द्यः॥११२९

२ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने ।

२ ३ २ ३ १ २ ३ २
सद्माभि सत्यो अध्वरः॥११३०

२ ३ १ २र ३ २ ३ १ २ ३ १ २र
ओ३म् परि यत्काव्या कविर्नृम्णा पुनानो अर्षति ।

२र ३ १ २
स्वर्वाजी सिषासति॥११३१

१ २ ३ २उ ३ २ ३ १ २
ओ३म् पवमानो अभि स्पृधो विशो राजेव सीदति।

१ २ ३ १ २ ३ १ २
यदीमृण्वन्ति वेधसः॥११३२

२ ३ २ ३ १ २ ३ २उ ३ १ २
ओ३म् अव्या वारे परि प्रियो हरिर्वनेषु सीदति ।

३ १ २ ३ २
रेभो वनुष्यते मती। ११३३

२ ३ १ २र ३ १ २ ३ १ २र
ओ३म् स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।

२ ३ १ २ ३ १ २
रणा यो अस्य धर्मणा॥११३४

२ ३ १ २र ३ २ ३ १ २ ३ १ २
ओ३म् आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः ।

३ १ २ ३ १ २
विदाना अस्य शक्मभिः॥११३५

३ १ २ ३ २उ ३ १ २
ओ३म् अस्मभ्यँ रोदसी रयिं मध्वो वाजस्य

३ १ २ २ ३ १ २ ३ १ २
सातये। श्रवो वसूनि सञ्जितम्॥११३६

२ ३ १ २र ३ २उ ३ १ २ ३ १ २
ओ३म् आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणाम् ।

२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम्॥११३८

२ ३ १ २र ३ २ ३ १ २ ३ २
ओ३म् आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा ।

२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम्॥११३९

१ २र ३ २ ३ १ २ ३ १ २ ३ २
ओ३म् ये सोमासः परावति ये अर्वावति सुन्विरे ।

२ ३ १ २ ३ १ २
ये वादः शर्यणावति॥११६३

१ २ ३ २ ३ १ २ ३ १ २र ३क २र
ओ३म् य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्।

२ ३ १ २ ३ १ २
ये वा जनेषु पञ्चसु॥११६४

१ २ ३ २ ३ २उ ३ १ २ ३ २ ३ १ २
ओ३म् ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् ।

३ २ ३ २ ३ १ २
स्वाना देवास इन्दवः॥११६५

३ १ २र ३ २ ३ १ २र ३ १ २
ओ३म् एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन्।

वर्धन्तो अस्य वीर्यम्॥११७८

ओ३म् पुनानासश्चमूषदो गच्छन्तो वायुमश्विना। ते
नो धत्त सुवीर्यम्॥११८१

ओ३म् इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय।
देवानां योनिमासदम्॥११८०

ओ३म् मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त
धीतयः। अनु विप्रा अमादिषुः॥११८१

ओ३म् देवेभ्यस्त्वा मदाय कꣳ सृजानमति मेष्यः।
सं गोभिर्वासयामसि॥११८२

ओ३म् पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः। परि
गव्यान्यव्यत॥११८३

ओ३म् मघोन आ पवस्व नो जहि विश्वा अप
द्विषः। इन्दो सखायमा विश॥११८४

ओ३म् नृचक्षसं त्वा वयमिन्द्रपीतꣳ स्वर्विदम् ।
भक्षीमहि प्रजामिषम्॥११८५

ओ३म् वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि ।
सहो नः सोम पृत्सु धाः॥११८६

ओ३म् सोमः पुनानो अर्षति सहस्रधारो अत्यविः ।
वायोरिन्द्रस्य निष्कृतम्॥११८७

ओ३म् पवमानमवस्यवो विप्रमभि प्र गायत ।
सुष्वाणं देववीतये॥११८८

ओ३म् पवन्ते वाजसातये सोमाः सहस्रपाजसः ।

३ २ ३ १ २
गृणाना देववीतये॥११८९

३ २ ३ १ २ ३ १ २ ३ १ २र
ओ३म् उत नो वाजसातये पवस्व बृहतीरिषः ।

३ १ २ ३ १ २
द्युमदिन्दो सुवीर्यम्॥११९०

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
ओ३म् अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।

२उ ३ १ २ ३ १ २
वि वारमव्यमाशवः॥११९१

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
ओ३म् ते नः सहस्रिणꣳ रयिं पवन्तामा सुवीर्यम् ।

३ २ ३ २ ३ १ २
सुवाना देवास इन्दवः॥११९२

३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
ओ३म् वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः ।

३ १ २र
दधन्विरे गभस्त्योः॥११९३

२ ३ १ २ ३ १ २र ३ १ २
ओ३म् जुष्ट इन्द्राय मत्सरः पवमानः कनिक्रदत् ।

२ ३ २ ३ १ २
विश्वा अप द्विषो जहि॥११९४

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः ।

१ २ ३ १ २
योनावृतस्य सीदत॥११९५

१ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् सोमा असृग्रमिन्दवः सुता ऋतस्य धारया ।

१ २ ३ १ २
इन्द्राय मधुमत्तमाः॥११९६

३ १ २र ३ १ २ ३ २उ ३ १ २
ओ३म् अभि विप्रा अनूषत गावो वत्सं न धेनवः ।

२ ३ १ २ ३ १ २
इन्द्रꣳ सोमस्य पीतये॥११९७

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् ।

१ २ ३ १ २र ३ २
सोमो गौरी अधि श्रितः॥११९८

३ १ २र ३ २ ३ १ २
ओ३म् दिवो नाभा विचक्षणोऽव्यो वारे महीयते ।

२ ३ २ ३ १ २ ३ २
सोमो यः सुक्रतुः कविः॥११९९

१ २र ३ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् यः सोमः कलशेष्वा अन्तः पवित्र आहितः ।

२उ ३ १ २
तमिन्दुः परि षस्वजे॥१२००

२उ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि ।

२ ३ १ २ ३ १ २
जिन्वन्कोशं मधुश्चुतम्॥१२०१

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् ।

३ १ २र ३ २
हिन्वानो मानुषा युजा॥१२०२

१ २ ३ २ ३ १ २
ओ३म् आ पवमान धारय रयिꣳ सहस्रवर्चसम् ।

३ १ २ ३ १ २
अस्मे इन्दो स्वाभुवम्॥१२०३

३ २ ३ २ ३ २ ३ २उ ३ १ २र
ओ३म् अभि प्रिया दिवः कविर्विप्रः स धारया

३ २ १ २ ३ १ २
सुतः। सोमो हिन्वे परावति॥१२०४

२ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः ।

३ १ २ ३ २
वाणस्य चोदया पविम्॥१२०५

३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।

२उ ३ २ ३ १ २
यदव्य एषि सानवि॥१२०६

२ ३ २३ १ २ ३ १ २र
ओ३म् अव्या वारैः परि प्रियꣳ हरिꣳ

३ १ २ १ २ ३ १ २
हिन्वन्त्यद्रिभिः। पवमानं मधुश्चुतम्॥१२०७

१ २ ३ २ ३ १ २
ओ३म् आ पवस्व मदिन्तम पवित्रं धारया कवे ।

३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम्॥१२०८

१ २ ३ १ २ ३ २ ३ १ २
ओ३म् स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः ।

१ २ ३ १ २
एन्द्रस्य जठरं विश॥१२०९

१२ ३ २ ३ १ २३ १ २ ३ १ २
ओ३म् पुरः सद्य इत्थाधिये दिवोदासाय शंबरम् ।

२ ३ २ ३ २ ३ १ २
अध त्यं तुर्वशं यदुम्॥१२११

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।

१ २ ३ २ ३ १ २
त्वरा सहस्रिणीरिषः॥१२१२

३ १ २ ३ १ २र ३ १ २ ३ १
ओ३म् महो नो राय आ भर पवमान जही

२र १ २ ३ २ ३ १ २
मृधः। रास्वेन्दो वीरवद्यशः॥१२१४

१ २ ३ २ ३ २उ ३ २ ३ १ २ ३ १
ओ३म् न त्वा शतं च न ह्रुतो राधो दित्सन्तमा

२ १ २ ३ १ २ ३ १ २
मिनन्। यत्पुनानो मखस्यसे॥१२१५

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २र
ओ३म् अयुक्त सूर एतशं पवमानो मनावधि ।

३ १ २ ३ १ २
अन्तरिक्षेण यातवे॥१२१७

३ २उ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् उत त्या हरितो रथे सूरो अयुक्त यातवे ।

२ ३ २ ३ १ २ ३ २
इन्दुरिन्द्र इति ब्रुवन्॥१२१८

२ ३ १ २र ३ १ २र ३ १ २र
ओ३म् इन्द्रः स दामने कृत ओजिष्ठः स बले

३ २ ३ २ ३ २उ ३ २
हितः। द्युम्नी श्लोकी स सोम्यः॥१२२३

३ २उ ३ १ २र ३ १ २ ३ १ २
ओ३म् गिरा वज्रो न सम्भृतः सबलो अनपच्युतः ।

३ २ ३ १ २र
ववक्ष उग्रो अस्तृतः॥१२२४

२ ३ १ २ ३ १ २ ३ २उ ३क २र
ओ३म् तव त्य इन्दो अन्धसो देवा मधोर्व्याशत ।

१ २ ३ १ २
पवमानस्य मरुतः॥१२२६

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
ओ३म् दिवः पीयूषमुत्तमꣳ सोममिन्द्राय वज्रिणे ।

३ २ ३ १ २
सुनोता मधुमत्तमम्॥१२२७

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पवमान नि तोशसे रयिꣳ सोम श्रवाय्यम् ।

१ २ ३ १ २र
इन्दो समुद्रमा विश॥१२३६

३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
ओ३म् कविमिव प्रशꣳस्यं यं देवास इति द्विता ।

१ २र ३ २
नि मर्त्येष्वादधुः॥१२४५

१ २ ३ २ ३ १ २ ३ १ २र
ओ३म् त्वं यविष्ठ दाशुषो नृꣳपाहि शृणुही गिरः ।

१ २ ३ २ ३ १ ३र
रक्षा तोकमुत त्मना॥१२४६

३ २ ३ १ ३र ३ १ २ ३ १
ओ३म् एष देवो अमर्त्यः पर्णवीरिव दीयते । अभि
३र ३ १ २
द्रोणान्यासदम्॥१२५६

३ १ ३र ३ १ २ ३ २ ३ १ २
ओ३म् एष विप्रैरभिष्टुतोऽपो देवो वि गाहते ।
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे॥१२५७

३ १ ३र ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् एष विश्वानि वार्या शूरो यन्निव सत्वभिः ।
१ २
पवमानः सिषासति॥१२५८

३ २ ३ १ २ ३ १ २
ओ३म् एष देवो रथर्यति पवमानो दिशस्यति ।
३ १ २ ३ २
आविष्कृणोति वग्वनुम्॥१२५९

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् एष देवो विपन्युभिः पवमान ऋतायुभिः ।
२ ३ १ २
हरिर्वाजाय मृज्यते॥१२६०

३ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् एष देवो विपा कृतोऽति ह्वराꣳसि धावति।

१ २ ३ १ २
पवमानो अदाभ्यः॥१२६१

३ २उ ३ १ २ ३ १ २र ३ १ २
ओ३म् एष दिवं वि धावति तिरो रजाꣳसि धारया।

१ २ ३ १ २
पवमानः कनिक्रदत्॥१२६२

३ २उ ३ १ २ ३ २उ ३ १ २
ओ३म् एष दिवं व्यासरत्तिरो रजाꣳस्यस्तृतः ।

१ २ ३ २
पवमानः स्वध्वरः॥१२६३

३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।

१ २ ३ १ २
हरिः पवित्रे अर्षति॥१२६४

३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः ।

१ २ ३ २
धारया पवते सुतः॥१२६५

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् एष धिया यात्यण्व्या शूरो रथेभिराशुभिः ।

२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम्॥१२६६

३ २ ३ १ २ ३ २ ३ १ २
ओ३म् एष पुरू धियायते बृहते देवतातये ।
२ ३ १ २ ३ १ २
यत्रामृतास आशत॥१२६७

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।
३ २ ३ १ २र
प्रचक्राणं महीरिषः॥१२६८

३ २ ३ १ २र ३ २ ३ १ २ ३ २
ओ३म् एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा ।
१ २ ३ २ ३ १ २
यदी तुञ्जन्ति भूर्णयः॥१२६९

३ २ ३ १ २ ३ २ ३ १ २३ १ २
ओ३म् एष रुक्मिभिरीयते वाजी शुभ्रेभिरꣳशुभिः ।
२ ३ १ २ ३ १ २
पति सिन्धूनां भवन्॥१२७०

३ १ २र ३ १ २ ३ १ २ ३ ३क ऽ १ २
ओ३म् एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३वृषा ।
३ १ २र ३ १ २
नृम्णा दधान ओजसा॥१२७१

३ १ २र ३ १ २र ३ ३ १ २र
ओ३म् एष वसूनि पिब्दनः परुषा ययिवाꣳ अति ।

२ ३ १ २
अव शादेषु गच्छति॥१२७२

३ २ ३ २उ ३ २ ३ १ २ ३ १ २
ओ३म् एतमु त्यं दश क्षिपो हरिꣳ हिन्वन्ति यातवे।

३ २ ३ १ २
स्वायुधं मदिन्तमम्॥१२७३

३ २ ३ २उ ३ २उ ३ १ २
ओ३म् एष उ स्य वृषा रथोऽव्या वारेभिरव्यत ।

२ ३ १ २ ३ १ २
गच्छन्वाजꣳ सहस्रिणम्॥१२७४

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् एतं त्रितस्य योषणो हरिꣳ हिन्वन्त्यद्रिभिः ।

२ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये॥१२७५

३ १ २र ३ २ ३ २उ ३ १ २
ओ३म् एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।

१ २ ३ २उ ३ १ २
गच्छं जारो न योषितम्॥१२७६

३ २उ ३ १ २र ३ १ २र २उ
ओ३म् एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः । य

३ २३ १ २
इन्दुर्वारमाविशत्॥१२७७

३ २उ ३ १ २ ३ १ २र ३ २
ओ३म् एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।

२ ३ १ २ ३ २ ३ २
क्रन्दन्योनिमभि प्रियम्॥१२७८

३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् एतं त्यꣳ हरितो दश मर्मृज्यन्ते अपस्युवः ।

२ ३ १ २ ३ १ २
याभिर्मदाय शुम्भते॥१२७९

३ २ ३ २ ३ १ २र ३ १ २र ३ १ २
ओ३म् एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः ।

२ ३ २३ १ २
अव्यो वारं वि धावति॥१२८०

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।

२ ३ १ २ ३ २
विश्वा धामान्याविशन्॥१२८१

३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
ओ३म् एष देवः शुभायतेऽधि योनावमर्त्यः । वृत्रहा

२ ३ १ २
देववीतमः॥१२८२

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
ओ३म् एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः। अभि

२र
द्रोणानि धावति॥१२८३

३ १ २र ३ १ २ ३ २ ३ १ २
ओ३म् एष सूर्यमरोचयत्पवमानो अधि द्यवि ।

३ १ २ ३ १ २र
पवित्रे मत्सरो मदः॥१२८४

३ १ २र ३ १ २ ३ १ २
ओ३म् एष सूर्येण हासते संवसानो विवस्वता ।

१ २ ३ १ २र
पतिर्वाचो अदाभ्यः॥१२८५

३ २ ३ २ ३ १ २ ३ २ ३ १ २
ओ३म् एष कविरभिष्टुतः पवित्रे अधि तोशते ।

३ २उ ३ १ २
पुनानो घ्नन्नप द्विषः॥१२८६

३ १ २र ३ १ २ ३ १ २र
ओ३म् एष इन्द्राय वायवे स्वर्जित्परि षिच्यते ।

३ १ २ ३ १ २
पवित्रे दक्षसाधनः॥१२८७

३ २उ ३ १ २ ३ २ ३ १ २र ३ २
ओ३म् एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः ।

२ ३ १२ ३ २
सोमो वनेषु विश्ववित्॥१२८८

३२ ३ १२ ३ १२ ३२ १२
ओ३म् एष गव्युरचिक्रदत्पवमानो हिरण्ययुः। इन्दुः

३ १ २र
सत्राजिदस्तृतः॥१२८९

३२ ३क २र ३ १२३ २३ १२
ओ३म् एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः ।

३ २उ ३ २ ३ १
पुनान इन्दुरिन्द्रमा॥१२९०

३२ ३ १२ ३ १२ ३ १ २
ओ३म् एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति ।

३ १२ ३ २
देवावीरघशꣳसहा॥१२९१

२ ३२ ३२३ २३ १२ ३१२
ओ३म् स सुतः पीतये वृषा सोमः पवित्रे अर्षति ।

३ १ २र ३ २
विघ्नन्रक्षाꣳसि देवयुः॥१२९२

२ ३ १२ ३ १ २र ३ २
ओ३म् स पवित्रे विचक्षणो हरिरर्षति धर्णसिः ।

३ २उ ३ १ २
अभि योनिं कनिक्रदत्॥१२९३

२ ३ १ २ ३ २ ३ १ ३र ३ १
ओ३म् स वाजी रोचना दिवः पवमानो वि

२ ३ १ ३र ३ १ २
धावति। रक्षोहा वारमव्ययम्॥१२९४

२ ३ ३उ ३ १ २ ३ १ २
ओ३म् स त्रितस्याधि सानवि पवमानो अरोचयत् ।

३ २ ३ १ २ ३ २
जामिभिः सूर्यꣳ सह॥१२९५

१ २ ३ १ ३र ३ १ २ ३ १ ३र
ओ३म् स वृत्रहा वृषा सुतो वरिवोविददाभ्यः ।

२ ३ १ २
सोमो वाजमिवासरत्॥१२९६

२ ३ २ ३ १ २ ३ २ ऽ १ ३र
ओ३म् स देवः कविनेषितो३ऽभि द्रोणानि धावति ।

२ ३ १ २ ३ १ २
इन्दुरिन्द्राय मꣳहयन्॥१२९७

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।

३ १ २ ३ १ २
जीरा अजिरशोचिषः॥१३१०

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।

१ २ ३ १ २
हरिश्चन्द्रो मरुद्गणः॥१३११

१ २ ३क २र ३ १ २ ३ १ २
ओ३म् पवमान् व्यश्नुहि रश्मिभिर्वाजसातमः ।

१ २ ३ २ ३ १ २
दधत्स्तोत्रे सुवीर्यम्॥१३१२

१ २ ३ २ ३ १ २र ३ २
ओ३म् त्वꣳ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे ।

१ २ ३ १ २
पवस्व मꣳहयद्रयिः॥१३२३

२ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् त्वꣳ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः ।

१ २ ३ १ २र
इन्दुः सत्राजिदस्तृतः॥१३२४

१ २ ३ १ २र ३क २र ३ १ २
ओ३म् त्वꣳ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् ।

३ २ ३ २ ३ १ २
द्युमन्तꣳ शुष्ममा भर॥१३२५

१ २र ३ १ २ ३ २ ३ १ २
ओ३म् तमिद्वर्धन्तु नो गिरो वत्सꣳ सꣳशिश्वरीरिव ।

१ २र ३ १ २
य इन्द्रस्य हृदꣳसनिः॥१३३६

१ २ ३ १ ३र ३ १ २
ओ३म् अर्षा नः सोम शं गवे धुक्षस्व

३ २ ३ १ २ १ २ ३ १ २
पिप्युषीमिषम्। वर्धा समुद्रमुक्थ्यम्॥१३३७

१ २ ३ २उ ३ २ ३ २ ३ १ २र
ओ३म् पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि ।

३ १ २ ३ १ २र
अयक्ष्मा बृहतीरिषः॥१४३५

१ २ ३ १ २ ३ २ ३ १ २ ३ २ २र
ओ३म् तया पवस्व धारया यया गाव इहागमन् ।

१ २ ३ १ २ ३ २
जन्यास उप नो गृहम्॥१४३६

३ १ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् घृतं पवस्व धारया यज्ञेषु देववीतमः ।

३ १ २ ३ १ २र
अस्मभ्यं वृष्टिमा पव॥१४३७

१ २ ३ २ ३क ऽ १ २ ३ १ २ ३ १ २
ओ३म् स न ऊर्जे व्य३व्ययं पवित्रं धाव धारया।

३ १ २ ३ २ ३ १ २
देवासः शृणवन्हि कम्॥१४३८

१ २ ३ १ २ ३ १ २
ओ३म् पवमानो असिष्यदद्रक्षांस्यपजङ्घनत् ।

३ २ ३ २ ३ १ २
प्रत्नवद्रोचयन्रुचः॥१४३९

३ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे ।

१ २ ३ १ २
सोमाय गाथमर्चत॥१४४४

१ २ ३ १ २ ३ १ २र
ओ३म् हस्तच्युतेभिरद्रिभिः सुतꣳ सोमं पुनीतन ।

२ ३ १ २ ३ १ २
मधावा धावता मधु॥१४४५

२ ३ १ २र ३ २ ३ १ २
ओ३म् नमसेदुप सीदत दध्नेदभि श्रीणीतन ।

२ ३ १ २
इन्दुमिन्द्रे दधातन॥१४४६

३ १ २र ३ १ २ ३ १ २र
ओ३म् अमित्रहा विचर्षणिः पवस्व सोम शं गवे ।

३ १ २ ३ २
देवेभ्यो अनुकामकृत्॥१४४७

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् इन्द्राय सोम पातवे मदाय परि षिच्यसे ।

३ १ २र ३ १ २
मनश्चिन्मनसस्पतिः॥१४४८

१ २ ३ १ २ ३ १ २
ओ३म् पवमान सुवीर्यं रयिं सोम रिरीहि नः ।

२ ३ १ २ ३ २
इन्दविन्द्रेण नो युजा॥१४४९

१ २ ३ १ २ ३ २ ३ १ २
ओ३म् पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।

३ १ २र ३ १ २
अभि विश्वानि काव्या॥१६९९

१ २ ३ २उ ३ १ २ ३ २उ
ओ३म् पवमाना दिवस्पर्यन्तरिक्षादसृक्षत । पृथिव्या

३ १ २
अधि सानवि॥१७००

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।

२ ३ २ ३ २ ३ १ २
घ्नन्तो विश्वा अप द्विषः॥१७०१

२ ३ १ २ ३ १ २ ३ १ २
ओ३म् उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः।

३ २ ३ १ २ ३ १ २
नुदस्व याः परिस्पृधः॥१७१४

३ १ २ ३ १ २र ३ १ २र ३ २
ओ३म् अया निजघ्निरोजसा रथसङ्गे धने हिते ।

२ ३ १ २र ३ २
स्तवा अबिभ्युषा हृदा॥१७१५

१ २ ३ २ ३ २उ ३ १ २ ३क २र
ओ३म् अस्य व्रतानि नाधृषे पवमानस्य दूढ्या ।

३ १ २र ३ १ २
रुज यस्त्वा पृतन्यति॥१७१६

१ २ ३ २ ३ १ २ ३ १ २
ओ३म् तꣳ हिन्वन्ति मदच्युतꣳ हरिं नदीषु

३ १ २ २ ३ १ २ ३ २
वाजिनम्। इन्दुमिन्द्राय मत्सरम्॥१७१७

२ ३ १ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्र ते धारा असश्चतो दिवो न यन्ति वृष्टय।

२ ३ १ २ ३ १ २
अच्छा वाजꣳ सहस्रिणम्॥१७६१

३ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् अभि प्रियाणि काव्या विश्वा चक्षाणो

१ २ ३ १ २र
अर्षति। हरिस्तुञ्जान आयुधा॥१७६२

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
ओ३म् स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।

३ १ २र
श्येनो न वꣳसु षीदति॥१७६३

२ ३ १ २ ३ २उ ३ १ २ ३ १ २र
ओ३म् स नो विश्वा दिवो वसूतो पृथिव्या अधि ।

३ १ २ ३ १ २
पुनान इन्दवा भर॥१७६४

२ ३ १ २ ३ १ २ ३ १ २र
ओ३म् प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसा ।

३ १ २र ३ १ २
देवाँ अनु प्रभूषतः॥१७६५

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ओ३म् सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा।

१ २ ३ २ ३क २र
ज्योतिर्जज्ञानमुक्थ्यम्॥१७६६

३ १ २ ३ १ २ ३ १ २
ओ३म् सुषहा सोम तानि ते पुनानाय प्रभूवसो ।

१ २ ३ १ २
वर्धा समुद्रमुक्थ्यम्॥१७६७

## देवता-पूषा

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् उत नो गोषणिं धियमश्वसां वाजसामुत ।

३ १ २ ३ १ २
नृवत्कृणुह्यूतये॥१५९३

## देवता-ब्रह्मणस्पतिः

३ २ ३ १ २
ओ३म् सोमानाᳪ स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तँ य औशिजः॥१४६३

## देवता-मरुतः

१ २ ३ १ ३ ३ २ ३ २ ३ १ २
ओ३म् गौर्धयति मरुताᳪ श्रवस्युर्माता मघोनाम् ।
३ २उ ३ १ २
युक्ता वह्नी रथानाम्॥१४९

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २
ओ३म् उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत ।
३ १ २ ३ १ २र
वाश्रा अभिज्ञु यातवे॥२२१

१ २र ३ २उ ३ १ २ ३ १ २ ३ २ १ २ ३
ओ३म् आदह स्वधामनु पुनर्गर्भत्वमेरिरे । दधाना
१ २ ३ १ २
नाम यज्ञियम्॥८५१

३ १ २ ३ १ २
ओ३म् शशमानस्य वा नर स्वेदस्य सत्यशवसः ।

३ १ २र ३ १ २
विदा कामस्य वेनतः॥१५९४

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
ओ३म् पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः ।

३ २ ३ १ २
त्रिषधस्थस्य जावतः॥१७८६

३ १ २ ३ २ ३ १ २र ३ २ ३ १ २
ओ३म् उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः ।

३ १ २र
प्रातर्होतेव मत्सति॥१७८७

## देवता- मित्रावरुणौ

३ १ २ ३ १ २ ३ १ २र
ओ३म् उरुशꣳसा नमोवृधा मह्ना दक्षस्य राजथः ।

३ २
द्राघिष्ठाभिः शुचिव्रता॥६६४

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् गृणाना जमदग्निना योनावृतस्य सीदतम् ।

३ १ २र
पातꣳ सोमममृतावृधा॥६६५

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् मित्रं वयꣳ हवामहे वरुणꣳ सोमपीतये ।

२ ३ २ ३ १ २
या जाता पूतदक्षसा॥७९३

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ २
ओ३म् ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती। ता

३ १ २र
मित्रावरुणा हुवे॥७९४

१ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।

१ २ ३ १ २
करतां नः सुराधसः॥७९५

३ १ २ ३ १ २ ३ १ २
ओ३म् मित्रꣳ हुवे पूतदक्षं वरुणं च रिशादसम् ।

१ २ ३ २ ३ १ २
धियं घृताचीꣳ साधन्ता॥८४७

३ १ २ १ २
ओ३म् ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं

३ १ २
बृहन्तमाशाथे॥८४८

३ १ २ ३ १ २र ३ १ २ ३ १ २
ओ३म् कवी नो मित्रावरुणा तुविजाता उरुक्षया ।

१ २ ३ १ २
दक्षं दधाते अपसम्॥८४९

३ १ २ ३ १ ३र
ओ३म् अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।

२उ ३ १ २ ३ १ २
ममेदिह श्रुतꣳ हवम्॥९१०

१ २ ३ १ २ ३ १ २र ३ २
ओ३म् राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।

३ १ २
सहस्रस्थूण आशाते॥९११

२ ३ १ २ ३ १ २ ३ १
ओ३म् ता सम्राजा घृतासुती आदित्या

२र ३ १ २ १ २ ३ १ २
दानुनस्पती। सचेते अनवह्वरम्॥९१२

३ १ २ ३ १ २र ३ १ २ २ ३
ओ३म् पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण । मित्र

१ २ ३ २
वꣳसि वाꣳ सुमतिम्॥९८५

१ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् ता वाꣳ सम्यगद्रुह्वाणेषमश्याम धाम च ।

३ १ २
वयं वां मित्रा स्याम॥९८६

३ १ २ ३ १ २ ३ १ २
ओ३म् पातं नो मित्रा पायुभिरुत त्रायेथाꣳ

३ २ ३ २ ३ १ २ ३ १ २
सुत्रात्रा। साह्याम दस्यूं तनूभिः॥९८७

१ २ ३ १ २ ३ १ २ ३ २ ३ २
ओ३म् प्र वो मित्राय गायत वरुणाय विपा गिरा ।

१ २ ३ २ ३ २
महिक्षत्रावृतं बृहत्॥११४३

३ २ ३ २ ३ १ २ ३ २ ३ १ २र
ओ३म् सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च ।

३ २ ३ १ २ ३ २
देवा देवेषु प्रशस्ता॥११४४

१ २ ३ १ २ ३ १ ३ २
ओ३म् ता नः शक्तं पार्थिवस्य महो रायो

३ १ २ १ २ ३ २ ३ १ २
दिव्यस्य। महि वां क्षत्रं देवेषु॥११४५

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् ऋतमृतेन सपन्तेषिरं दक्षमाशाते । अद्रुहा

३ १ २
देवौ वर्धते॥१४६६

३ १ २ ३क २र ३ २उ ३ १ २ ३ २ ३
ओ३म् वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः। बृहन्तं

१ २
गर्तमाशाते॥१४६७

## देवता- वरुणः

३ १ २ ३ १ २ ३ १ २
ओ३म् इमं मे वरुण श्रुधी हवमद्या च मृडय ।

१ २ ३ १ ३र
त्वामवस्युरा चके॥१५८५

## देवता- वायुः

३ १ ३र ३ १ २ ३ २ ३ १ २
ओ३म् नियुत्वान्वायवा गह्ययꣳ शुक्रो अयामि ते ।

१ २ ३ २ ३ २
गन्तासि सुन्वतो गृहम्॥६००

३ १ २ ३ १ २ ३ २उ ३ २ ३
ओ३म् उत वात पितासि न उत भ्रातोत नः

१ २ १ २ ३ १ २
सखा। स नो जीवातवे कृधि॥१८४१

२ ३ १ २ ३ २ ऽ २ ३ १ २ ३ १ २
ओ३म् यददो वात ते गृहे३ऽमृतं निहितं गुहा ।

१ २ ३ १ २
तस्यो नो देहि जीवसे॥१८४२

## देवता-विश्वेदेवाः

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ओ३म् उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये ।

३ १ २
सुमृडीका भवन्तु नः॥१५९५

## देवता- विष्णुः

३ २उ ३ १ २ ३ १ २र ३ २
ओ३म् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।

१ २ ३ १
समूढमस्य पाꣳसुले॥२२२

१ २ ३ १ २र ३ १ २ ३ १ २र
ओ३म् त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।

२ ३ १ २ ३ १ २
अतो धर्माणि धारयन्॥१६७०

२ ३ १ २ ३ १ २ ३ १ २
ओ३म् विष्णोः कर्माणि पश्यत यतो व्रतानि

३ २ १ २ ३ २ ३ १ २
पस्पशे। इन्द्रस्य युज्यः सखा॥१६७१

१ २र ३ २ ३ १ २र ३ १ २
ओ३म् तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः ।

३ २ ३ २ ३ १ २
दिवीव चक्षुराततम्॥१६७२

१ २र ३ १ २ ३ २ २ १ २
ओ३म् तद्विप्रासो विपन्युवो जागृवाꣳसः समिन्धते ।

२ ३ १ २ ३ २ ३ २
विष्णोर्यत्परमं पदम्॥१६७३

## देवता- सरस्वती

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।

१ २ ३ १ २
सरस्वती स्तोम्या भूत्॥१४६१

## देवता- सरस्वान्

३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः ।

१ २
सरस्वन्तꣳ हवामहे॥१४६०

## देवता- सविता

१ २ ३ १२र ३ १ २ ३ १ २ २ ३
ओ३म् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो

१ २ ३ १ २
यो नः प्रचोदयात्॥१४६२

## देवता- सूर्यः

१ २र ३ १ २ ३ १ २ ३ २
ओ३म् आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
३ १ २ ३ १ २
पितरं च प्रयन्त्स्वः॥६३०

३ १ २ ३ २उ ३ १ २ ३ २
ओ३म् अन्तश्चरति रोचनास्य प्राणादपानती ।
२र ३ १ २र
व्यख्यन्महिषो दिवम्॥६३१

३ २उ ३ १ २ ३ १ २ ३ १ २
ओ३म् त्रिꣳशद्धाम वि राजति वाक्पतङ्गाय धीयते ।
२ ३ २ ३ २ ३ १ २
प्रति वस्तोरह द्युभिः॥६३२

२ ३ २ ३ १ २ ३ १ २ ३ १ २
ओ३म् अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
१ २ ३ १ २
सूराय विश्वचक्षसे॥६३३

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
ओ३म् अदृश्रन्नस्य केतवो वि रश्मयो जनाꣳ अनु।
१ २ ३ १ २
भ्राजन्तो अग्नयो यथा॥६३४

३ १ २ ३ १ २ ३ १ २
ओ३म् तरणिर्विश्वदर्शतो ज्योति ष्कृदसि सूर्य ।

२ ३ १ २ ३ २
विश्वमाभासि रोचनम्॥६३५

३ २ ३ २ ३ १ २ ३ १ २र ३ १ २
ओ३म् प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।

३ २उ ३क २र ३ २
प्रत्यङ् विश्वꣳ स्वर्दृशे॥६३६

१ २ ३ १ २ ३ २ ३ २ ३ १ २
ओ३म् येना पावक चक्षसा भुरण्यन्तं जनाꣳ अनु।

१ २ ३ १ २
त्वं वरुण पश्यसि॥६३७

१ २र ३ १ २ ३ २ ३ १ २ ३ १ २
ओ३म् उद्द्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः ।

२ ३ १ २
पश्यञ्जन्मानि सूर्य॥६३८

१ २ ३ २ ३ २ ३ २ ३ १ २ ३क २र
ओ३म् अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।

१ २ ३ १ २
ताभिर्याति स्वयुक्तिभिः॥६३९

३ १ २ ३ २ ३ २ ३ १ २
ओ३म् सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।

३ १ २
शोचिष्केशं विचक्षणा॥६४०

# सामवेद सहिंता

१४ सितम्बर सन् १९४२ , में उत्तर प्रदेश के गाजियाबाद जिले के , ग्राम खुर्रमपुर सलेमाबाद मे एक विशेष बालक का जन्म हुआ। बालक जन्म से ही एक विलक्षणता से युक्त था और विलक्षणता यह कि जब भी यह बालक सीधा , शवासन की मुद्रा में, कुछ अन्तराल लेट जाता या लिटा दिया जाता , तो उसकी गर्दन दायें बायें हिलने लगती , कुछ मन्त्रोच्चारण होता और उसके उपरान्त सृष्टि के आदि काल से वर्तमान के काल तक के विभिन्न कालों के स्वयं और विभिन्न ऋषि-मुनियों के चिन्तन और घटनाओं पर आधारित ४५ मिनट तक एक दिव्य प्रवचन का प्रसारण होता। बाल्यावस्था होने के कारण , प्रारम्भ में आवाज़ अस्पष्ट होती और जैसे-जैसे आयु बढने लगी वैसे ही आवाज़ और विषय दोनो स्पष्ट होने लगे। पर एक अपठित ग्रामीण बालक के मुख से ऐसे दिव्य प्रवचन सुनकर जन मानस आश्चर्य करने लगा , बालक की ऐसी दिव्य अवस्था और प्रवचनों की गूढता के विषय मे कोई भी कुछ कहने की स्थिति में नही था।

इस स्थिति का स्पष्टीकरण भी दिव्यात्मा के प्रवचनो से ही हुआ। कि यह आत्मा सृष्टि के आदिकाल से ही विभिन्न कालों मे श्रृंगी ऋषि की उपाधि से विभूषित और सतयुग के काल में आदि ब्रह्मा के शाप के कारण इस युग मे जन्म लेने का कारण बनी। इस जन्म में अपठित रहने की स्थिति में जैसे ही यह शरीर श्वासन की मुद्रा में आता तो कुछ अन्तराल बाद स्वतः ही योग समाधि की स्थिति बन जाती। जहां इस दिव्यात्मा का पूर्व जन्मों का ज्ञान उदबुद्ध हो जाता और अन्तरिक्ष में उपस्थित सूक्ष्म शरीर धारी दिव्यात्माओं के समक्ष एक सत्संग सदृश्य स्थिति बन जाती जिसमें इस महान आत्मा का सूक्ष्म शरीरधारी आत्माओं के लिए प्रवचन होता। जिसमें इस आत्मा के पूर्व जन्मों के शिष्य महर्षि लोमश मुनि पूज्य महानन्द के प्रवचन भी होते। क्योंकि इस दिव्यात्मा का स्थूल शरीर यहां मृत्यु लोक में स्थित होने के कारण वहां सत्संग में दिया जाने वाला दिव्य प्रवचन इस शरीर के माध्यम से यहाँ उपस्थित जन मानस को भी सुनाई देते। इन प्रवचनों मे ईश्वरीय सृष्टि का अद्भुत रहस्य समाया हुआ है, ब्रह्माण्ड की विशालता सृष्टि का उद्देश्य , पूर्व कालों में विज्ञान की विशालता का दिग्दर्शन वैदिक सं स्कृति का उज्ज्वलतम स्वरुप आत्मा , परमात्मा और प्रकृति का स्वरूप विभिन्न कालो , का आंखो देखा सदृश्य वर्णन भगवान राम और भगवान कृष्ण के जीवन की दिव्यता का साक्षात दर्शन, क्या कुछ दिव्य नहीं है इन प्रवचनों मे, ये किसी भी मनुष्य को, समाज को और राष्ट्र को उच्च कोटि का जीवन जीने का कारण पैदा करने का सामर्थ्य रखते है।

पूज्यपाद गुरुदेव की २ ० वर्ष की अवस्था तक ये प्रवचन ऐसे ही जनमानस को आश्चर्यचकित और उनका मार्गदर्शन करते रहे। परन्तु कुछ प्रबुद्ध महानुभावों ने इन प्रवचनों की इस अमूल्य निधि को सुरक्षित रखने के उद्देश्य से सन् १९६२ से (टेप रिकार्ड) संरक्षित करने का निश्चय किया , यह क्रम पूज्यपाद गुरुदेव के महा प्रयाण सन् १९९२ तक किया।

इस अन्तराल पूज्यपाद गुरुदेव के १५ ०० प्रवचन, रिकार्ड किये गये। जिनको धीरे-धीरे पुस्तकों के रूप में प्रकाशित किया जा रहा है। जिसको जीवन में धारण करने के लिए और परमात्मा की अनुपम कृपा के प्रसारण के लिए प्रत्येक वैदिक धर्मी को प्रयास करना चाहिए। जिससे हम ऋषि ऋण से उऋण हो सकें और वसुधैव कुटुम्बकम की संस्कृति से निहित यह महान ज्ञान जनमानस मे प्रसारित हो सकें।

"श्रृङ्गी ऋषि वेद विज्ञान प्रतिष्ठान" की त्रैमासिक पत्रिका "श्रृङ्गी ऋषि ज्ञान प्रवाहिका" अवश्य पढ़े और पढ़ायें।
403/1, डी 6, सैक्टर 6, रोहिणी, दिल्ली-110085, दूरभाष: 011-27040587
Webside : www.shringirishi.org, E-mail: shringirishi.vani@gmail.com